शुद्धायां नास्ति सन्देहो दैवे पित्र्ये च कर्मणि ।
उपवासश्चैक-भक्तं नक्तं चायाचितं व्रतम् ॥ ३० ॥

दानञ्च षड्विधं दैवं क्रमादत्र विविच्यते ।
एकोद्दिष्टं पार्वणञ्च पित्र्यं द्वि-विधमीर्यते ॥ ३१ ॥

शुक्ले[1] पक्षे दर्श-विद्धा दर्शे[2] विद्धा द्वितीयया ।
उपोष्या प्रतिपच्छुक्ले मुख्या स्यादापराह्णिकी ॥३२॥

उक्तयोर्मध्ये शुद्धाया न निर्णयत्वमित्याह, शुद्धायामिति, दिन-द्वय-सत्त्वाभावात्, तस्यैव तद्बीजत्वादिति भावः। तथा च दैव-पित्र्य-विषये विद्धाया एव निर्णयत्वं[3] फलितम्। तत्रापि न निषेधे सा निर्णया तस्य काल-मात्रापेक्षित्वात्, किन्तु विधिष्वेव। तत्रापि मन्वादि-युगादि-ग्रहण[4]-व्यतीपातेषु तत्-काल-व्यापितेव। तदेतद् ध्वनयन् दैव-पित्र्ये विभज्यानुक्रामति उपेति सार्धेन। तत्र उपवासोऽहोरात्राभोजन-संकल्प-पालन-रूपः। तदहोरात्रान्तर्द्वितीय-भोजनाभाव-विशिष्टं मध्याह्न-भोजनमेकभक्तम्। एतादृशमेव प्रदोष-भोजनं नक्तम्। अयाचित-लब्धस्य तादृशमेव भोजनमयाचितम्। [5]अनयोर्विशेष्य-मात्रं मध्याह्नादि-साध्यं विशेषणांशस्त्वहोरात्र-साध्य एव। व्रतं पूजादि-रूपम् ॥ ३० ॥

अत्र प्रकरणे। एकोद्दिष्टमेकदैवत्यम्, पार्वणं त्रि-दैवत्यम् ॥ ३१ ॥

तत्रोपवासे प्रतिपन्निर्णयमाह शुक्लेति। शुक्ले पक्षे दर्श-विद्धा प्रतिपदुपोष्या, पक्षे दर्शे[6] कृष्णे पक्षे चादर्श-विद्धा प्रतिपदुपोष्येत्यर्थः। यद्यपि प्रतिपत् सूर्यास्त-पूर्व-त्रि-मुहूर्तात्मक-सायाह्न-मात्र-व्याप्त्यापि पूर्व-विद्धा भवति एषैव संमुखीत्युच्यते, तथापि तत्-पूर्व-भावि-त्रि-मुहूर्तात्मकापराह्णेऽपि यदि सा वर्तते तदैव पूर्वोपोष्येति भावः। अन्यथा तु परैवेत्याह विद्धेति। उभयत्र द्वितीया-युतैव[7] प्रतिपदुपोष्या स्यादित्यर्थः। मतान्तरमाह—शुक्ले इति। कृष्णे चेत्यपि बोध्यम् ॥ ३२ ॥

---

1. v.r शुक्ल-पक्षे। 2. v.r. कृष्णे। 3. v.r. B. निर्णयात्वं।
4. v.r. B. वैधृति। 5. v.r. B. अनयोर्योः।
6. v.r. B. दर्शेत्यस्यानुषङ्गेण तत्र च नञ्-प्रश्लेषेण दर्श-भिन्न-दर्श-सदृश-पूर्व-रूप-पौर्णमासी-ग्रहणेन।
7. v.r. B. विद्धैव।

तदभावे तु सायाह्न[1]-व्यापिनी परिगृह्यताम् ।
प्रातः-सङ्गव-मध्याह्नापराह्णाः सायमित्यसौ ॥ ३३ ॥
अत्राह्नः पञ्चधा भागो मुख्यो द्वि-त्र्यादि-भागतः ।
अभावेऽपि प्रतिपदः सङ्कल्पः प्रातरिष्यते ॥ ३४ ॥
तिथिस्त्रि-यामतोऽर्वाक् चेत्तिथ्यन्ते पारणं भवेत् ।
याम-त्रयोर्ध्वगामिन्यां प्रातरेव हि पारणम् ॥३५॥

"मुख्ये"ति सूचितानुकल्पमाह तदभेति । अत्र तुना "स्यादित्यादि"ना चास्य स्वानभिमतत्वं सूचितम् । अस्य पद्यस्यान्यथा व्याख्यानं प्राचां सर्वेषामयुक्त-मित्यग्रे स्फुटीभविष्यति । प्रातरादयः सावनादि-दिनस्य भाग-विशेषा इति विवक्षितार्थं प्रतिपादयन् स्वाभिमतं सिद्धान्त-भूतमह्नो विभागमाह प्रातरिति । अपराह्णा इति पाठः ॥ ३३ ॥

अत्र तिथि-निर्णय-विषये । तत्रेति पाठान्तरम् । पूर्वाह्णापराह्णौ द्वौ भागौ, प्रातर्मध्याह्न - सायाह्नास्त्रयः, प्रातर्मध्याह्नापराह्ण - सायाह्नाश्चत्वारः, मुहूर्त-भेदेन पञ्चदशेति । द्व्यादि-भागेभ्य इति । एवमसावह्नः पञ्चधा भागो मुख्यः श्रेष्ठ इत्यर्थः । तथा च ते श्रौताद्यनुष्ठान-विषया न । एतत् सम्भवे । मुख्य इत्यनेनानुकल्पत्वं क्वाचित्कं तत्र तेषामपि सूचितम् । तथा च सूर्योदयमारभ्य मुहूर्त-त्रयं प्रातस्ततो मुहूर्त-त्रयं संगवस्ततो मुहूर्त-त्रयं मध्याह्नस्ततो मुहूर्त-त्रयमपराह्णस्ततो मुहूर्त-त्रयं सायाह्न इति भावः । दर्श-विद्ध-प्रतिपद्युपवासे संकल्प-कालमाहाभावेऽपीति । प्रातस्तस्याः प्रतिपदोऽ-सत्त्वेऽपि तदुपवास-संकल्पः प्रातरिष्यत इत्यर्थः । "प्रातः संकल्पयेदि"त्युक्तेर्देव-लीयायाद्यासाकल्येन (?) तत्रापि तत्-सत्त्वाच्च । स च प्रातः-काल-वर्तमान-तिथिमेव कर्म-काल-युक्तत्वेन रूपेणाधिकरणतयोल्लिख्यामुक-तिथ्युपवासमहं करिष्ये इति अनेक-दिन-साध्यत्वे तत्-प्रभृति-तावदन्तं करिष्य इति ॥ ३४ ॥

एवं तत्रोपवासेऽपरेद्युर्भोजनात्मक-पारण-व्यवस्थामाह तिथिरिति । त्रियाम-शब्दः पात्रादिः । चेत् यदि समाप्यते तदेति शेषः । पारणं चोपवासाङ्ग

1. v.r. सायाह्ने ।

वल्युत्सवं च पूर्वेद्युरुपवासवदाचरेत् ।
मुख्य-तिथ्यन्तराये तु तिथि-शेषोऽपि गृह्यताम् ॥३६॥
शुद्धाऽधिका तु कृष्णापि पूर्वा सम्पूर्ति-सम्भवात् ।
ग्रहीतव्या त्वेक-भक्ते मध्याह्न-व्यापिनी तिथिः ॥३८॥
परेद्युरेव[1] तद्व्याप्तिः पूर्वेद्युर्वा दिन-द्वये ।
नोभयत्रोभयत्रांशे साम्यं वैषम्यमित्यमी ॥ ३९ ॥
षट् पक्षास्तेषु चैकैक-व्याप्तौ सैवात्र गृह्यताम् ।
दिन-द्वयेऽपि तद्व्याप्त्यभावव्याप्तौ चैक-देशतः ॥ ४० ॥

"भोक्ष्येऽहं पुण्डरीकाक्षे"ति संकल्प-विषयत्वात्, अप्-प्राशना-रूप-प्रतिनिधि-विधानाच्च । अत्र मूलमग्रे व्यक्तमेव ॥ ३५ ॥

प्रतिपदुपवास-निर्णयं कार्त्तिक-शुक्ल-प्रतिपदि ब्रह्म-पुराणादि-विहित-तत्-पूजा-रूप-वल्युत्सवेऽतिदिशति वल्लीति । चेन "बलेर्दिनमि"ति वचनोक्त-संग्रहः। पूर्व-विद्धायां विशेषमाह—मुख्येति। पूर्व-विद्धाया मुख्यायास्तिथेरन्तराये विघ्न-पातेनातिक्रमणे त्वित्यर्थः। कालस्याङ्गत्वात् कर्मणः प्राधान्यात्तदभावेन तदभावस्यान्याय्यत्वात्तत्त्यागाद् वरं तत्रानुष्ठानम्। अत एव "पौर्वाह्णिकास्तु तिथयो दैव-कार्ये फल-प्रदा" इति सङ्गच्छते ॥३६॥

शुद्धायामुभय-पक्षे उपवासे विशेषमाह शुद्धेति। अत एव तुः। अपिना शुक्ला-समुच्चयः। अत्राधिक्यं द्वेधा त्रिभिर्मुहूर्तैस्ततो न्यून-कालेन च। तत्राद्ये सत्यप्युत्तरस्य युग्मत्वे काल-व्याप्ति-वशात् पूर्वैव। अन्त्ये त्वयुग्मेति पूर्वैव। एव-मुत्तरदिनेऽसत्वेऽपि बोध्यम्। परं त्वत्रोभयत्र[2] न मुख्य उपवासः किन्त्वनुकल्प इति बोध्यम्। अथैक-भक्ते तन्निर्णयमाह ग्रहीति ॥३८॥

सा चात्र षोढेत्याह परेद्युरेवेति। तत्रैव मध्याह्नस्य व्याप्तिरित्याद्यर्थः। उभयत्रांशे इत्यस्यावृत्त्याऽन्वयाद् भेद-द्वयमाह साम्यमिति। तद्वैषम्यं वेत्यर्थः। इति एवं-प्रकारेणामी षट् पक्षाः।

अत्र व्यवस्थामाह—तेष्विति। चस्त्वर्थे व्युत्क्रमे च। तेषां मध्ये

1. v.r. परेद्युरपि। 2. v.r. B. तत्रोभयत्र।

सम-व्याप्तौ च पूर्वैव वैषम्ये त्वधिकेष्यताम् ।
अन्याङ्गस्यैक-भक्तस्य कालस्तदनुसारतः ।
उपवास-प्रतिनिधेस्तिथिः स्यादुपवासवत् ॥ ४१ ॥
प्रदोष-व्यापिनी नक्ते तिथिर्व्याप्तिर्दिन-द्वये ।
अव्याप्तिर्वाऽथवांऽशेन व्याप्तिः स्यात् सर्वथोत्तरा ॥४२॥
सौर-नक्ते तु सायाह्न-व्यापिनी न प्रदोषगा ।
अयाचिते तु तिथयः स्वीकार्या उपवासवत् ॥४३॥

एकैकस्मिन्नेव व्याप्तौ त्वित्यर्थः । अनेक-भक्तेऽग्रिमेषु त्रिषु पक्षेष्वेक एव निर्णय इत्याह दिनेति । एवम् एक-देशत इत्यस्य "सम-व्याप्तौ चे"त्यत्रान्वयः ॥३९-४०॥

पूर्वैव गौण-काल-व्याप्तेरपि लाभात् । एवं स्वतन्त्रैक-भक्ते उक्त्वाऽङ्गभूते तत्राह अन्याङ्गेति । तदिति अन्येत्यर्थः[1] । "त्वङ्गस्त्वि"ति पाठान्तरम् । यत्र प्रधानं[2] पूजादिकं मध्याह्ने विहितं तदङ्गं चैक-भक्तम्, तत्र प्रधानानुरोधेनाङ्ग-भूतस्य तस्य तद्दिन एव तदुत्तरमनुष्ठानमिति पराधीनतया न तत्र स्वतन्त्रः कालस्तिथि-विशेषो वेति भावः । अथ[3] प्रतिनिधि-भूते आह्वोपेति[4] । एकभक्तस्येत्यर्थः । तत्तिथौ तत् कार्यमित्यर्थः । एवं चैक-भक्त-त्रयं सिद्धम्—स्वतन्त्रमन्याङ्गं प्रतिनिधि-भूतं चेति ॥ ४१ ॥

अथ नक्ते काल-निर्णयमाह प्रदोषेति । पूर्ववदत्रापि षट्-पक्षास्तत्रैकैक-दिने[5] व्याप्तौ संशयाभावात् सामान्य-वाक्येनैव निर्णयमभिप्रेत्यावशिष्ट-पक्षेष्वेकमेव निर्णय-माह व्याप्तिरित्यादि । दिन-द्वये इत्यस्याग्रेऽपि सर्वत्र सम्बन्धः । अंशेनेति साम्येन वैषम्येण वेत्यर्थः । अत्राधिक्येनानिर्णयादाह सर्वथेति ॥ ४२ ॥

क्वचित् प्रदोष-व्याप्तेरपवादमाह सौरेति । सप्तमी-भानु-वारादौ यद् रवि-नक्तं विहितं तत्रोक्त-वैपरीत्येन सायाह्न-व्याप्तिर्मुख्यः पक्षः, प्रदोष-व्याप्तिरनुकल्पः । एवं च मुख्येति शेषो बोध्यः । पूर्ववच्चातुर्विध्यमस्यापि बोध्यम् । उपवास-तिथि-निर्णयमयाचितेऽतिदिशति अयेति । अत्रोपवास-तिथिवत्तिथिर्ग्राह्येत्यर्थः ॥४३॥

---

1. v. r. A. अन्यदित्यर्थः । 2. v. r. A. यत्राप्रधानं (?) । 3. v. r. B. अथ तत् ।
4. v. r. A. आह्वाथेति (?) । 5. v. r. B. दिन-व्याप्तौ ।

सोदय-त्रि-मुहूर्तायां कुर्याद्दानं व्रतानि च ।
उभयत्र तथात्वे तु पूर्वेद्युस्तदनुष्ठितिः ॥ ४४ ॥
परत्रैव तथात्वं चेत् पूर्वा ग्राह्या तिथि-क्षये ।
तिथेः साम्ये च वृद्धौ च गृह्यतां तिथिरुत्तरा ।
अस्पर्शे चैक-देशस्य व्याप्तौ पूर्वैव गृह्यताम् ॥४५॥
एकोद्दिष्टे तु मध्याह्न-युक्ता स्यादेक-भक्तवत् ।
एक-देश-सम-व्याप्तौ क्षये पूर्वाऽन्यथोत्तरा ॥ ४६ ॥
कुतपाद्यपराह्णान्त-व्याप्तिराब्दिक उत्तमा ।
तदभावेऽपराह्णस्य व्यापिका गृह्यतां तिथिः ॥ ४७ ॥

दान-व्रतयोस्तिथि-निर्णयमाह—सोदयेति । उदयेन सहितास्त्रयो मुहूर्ता यस्यास्तस्यामित्यर्थः[1] । अत्रापि पूर्ववत् षट् पक्षास्तत्र पूर्वेद्युरेव तथा द्वितीय-दिने स्पर्शेऽपि तथा तत्र संशयाभावात् पूर्वैव[2] सामान्य-वाक्यात्(?) । अथावशिष्ट-पक्षेष्वाहोभेति[3] । दिन-द्वये सोदय-त्रि-मुहूर्त-व्याप्तावपि पूर्वेद्युरेवेत्यर्थः ॥ ४४ ॥

यदा तु पूर्वेद्युः सोदय-त्रि-मुहूर्तमस्पृष्ट्वा परेद्युरेव सोदय-त्रि-मुहूर्तं व्याप्नोति तदा ग्राह्य-तिथेर्वृद्धि-क्षय-साम्यानुरोधेन निर्णयः । तत्र क्षये आह तिथि-क्षये इति । अन्ययोराह तिथेरिति । अस्पर्शे इति । चो व्युत्क्रमे, दिन-द्वये सोदय-त्रि-मुहूर्त-स्पर्शाभावे साम्येन वैषम्येण वैकदेश-व्याप्तौ वेत्यर्थः ॥ ४५ ॥

एवमुपवासादि-षड्विधे दैवे तिथिं निर्णीय क्रम-प्राप्त-पित्र्ययो[4]-रेकोद्दिष्टे तन्निर्णयमाह एकोद्दिष्टे त्विति । अत्रापि प्राग्वत् षट् पक्षास्तत्रांशे सम-व्याप्तिरिति पक्षं विनाऽन्य-पक्षेष्वेक-भक्त-न्यायेन निर्णयः । पञ्चमे तु तत्र पक्षे ग्राह्य-तिथेर्वृद्धि-साम्य-क्षयैर्निर्णय इत्याहैक-देशेति । क्षये तिथि-क्षये । अन्यथा तत्तिथि-वृद्धि-साम्ययोः ॥ ४६ ॥

अथ पार्वणे तन्निर्णयमाह कुतपेति । एतेन "अथ प्रत्याब्दिके निर्णयमाह कुतपादीतो"ति परास्तम् । अह्नोऽष्टमो मुहूर्तः कुतपः द्वादशेन तेनापराह्ण-समाप्तिः ।

1. तस्यां not found in B. 2. v. r. B. पूर्ववत् ।
3. v. r. A. वाक्ये प्याहोभेति । 4. v. r. B. पित्राद्यो ।

क्षये पूर्वोत्तरा वृद्धौ व्याप्तिश्चेदपराह्णयोः ।
न ग्राह्य-तिथिगौ[1] वृद्धि-क्षयावूर्ध्व-तिथिस्तु तौ ॥ ४८ ॥
साम्यात्तूर्ध्व-तिथिर्ग्राह्या पर-विद्धैव वृद्धिवत् ।
न स्पृशेदपराह्णौ चेत् पूर्वा स्यात् कुतपो वृथा ॥४९॥
वैषम्येणैक-देशस्य व्याप्तौ ग्राह्या महत्त्वतः ।
साम्येन चेत् क्षये पूर्वा परा स्याद् वृद्धि-साम्ययोः ॥५०॥
वृद्धि-साम्य-क्षया ग्राह्य-तिथिगा नोर्ध्वगा इह ।
द्वितीयाद्यास्तु पर्वान्तास्तुर्य-प्रकरणोदिताः ॥५१॥

तथा च कुतपादि-मुहूर्त-पञ्चक-व्यापिनी तिथिराब्दिके पार्वण-रूपे मुख्येत्यर्थः । अथानुकल्पमाह तदिति । मुहूर्त-पञ्चक-व्याप्त्यभावे इत्यर्थः । "पितृयर्थं चापराह्णिकी"ति सामान्य-वचनादिति भावः ॥ ४७ ॥

अत्रापि प्राग्वत् षट् पक्षाः, तत्र पूर्वेद्युरेव परेद्युरेव वा[2] व्याप्तिरिति पक्षयोरसन्देह एवेति सामान्यत एव तत्रानुष्ठानम् । उभयत्र तद्व्याप्तौ क्षयादितो निर्णयमाह क्षये इति । द्वितीय-दिनेऽपराह्ण-कृत्स्न[3]-व्याप्तेरभिमतायास्तिथि-वृद्धि-नियतत्वेन ग्राह्य-तिथि-क्षयासंभवादाह न ग्राह्य-तिथिगाविति । प्राग्वदत्र नेति भावः[4] ॥४८॥

वृद्धिवदेव साम्येऽपि परैवेत्याह साम्ये त्विति[5] । तुरप्यर्थे । ऊर्ध्वेति पूर्वान्वयि । दिन-द्वयेऽपराह्ण-स्पर्शाभावे निर्णयमाह न स्पृशेदिति । परेद्युः कुतपसत्त्वादाह कुतपो वृथेति ॥ ४९ ॥

दिन-द्वये अंशे वैषम्य-व्याप्तावाह वैषम्येति । महत्त्वत आधिक्येन । तत्रैव[6] साम्ये क्षयादितो निर्णयमाह साम्येन चेदिति । खर्वादि-वाक्यादिति भावः ॥५०॥

प्रत्यासन्न-निवारणायाह वृद्धीति । ग्राह्य-तिथीति पाठः ।

इति तृतीय-प्रकरणम् ॥

तुर्य-प्रकरण-प्रतिपाद्यमाह द्वितीयेत्यादिना "निर्णय" इत्यन्तेन । उदितेति नपुंसके भावे क्तः । व्यधिकरण-बहुव्रीहिः ॥ ५१ ॥

---

1. v.r. तिथिजौ । 2. v.r. B. परैव वा । 3. v.r. A. कृत । 4. B. not found
5. B. this passage is missing. 6. v.r. B. आधिक्येऽनन्तरैव ।

सञ्चारणीयः सामान्यात्तिथिषु प्रतिपन्नयः ।
क्वचित् क्वचिद्विशेषोऽस्ति सोऽयमत्राभिधीयते ॥५२॥

पूर्वेद्युरसती प्रातः परेद्युस्त्रि-मुहूर्तगा ।
सा द्वितीया परोपोष्या पूर्व-विद्धा ततोऽन्यथा ॥५३॥

रम्भा-तृतीया पूर्वा स्यादुत्तरा स्याद् व्रतान्तरे ।
परेद्युर्नास्ति चेत् पूर्व-विद्धाऽप्यस्तु व्रतान्तरे ॥५४॥

देव-पितृ-विषयम् उक्त-प्रतिपन्निर्णयं द्वितीयादिष्वतिदिशति संचेति। सामान्यात् समानत्वात्। तिथिषु द्वितीयादिषु। नयो निर्णयः। अस्यापवाद-माह क्वचिदिति। वीप्साऽनेक-स्थलाशया। अत्र अस्मिन् प्रकरणे ॥ ५२ ॥

तमेव विशेषमाह पूर्वेद्युरिति। यदा या द्वितीया पूर्वेद्युः प्रातर्मुहूर्त-त्रयात्मकेऽसती[1] अविद्यमाना तमस्पृशती परेद्युस्तं कालं व्याप्तवती[2] तदा सा परा पर-विद्धोपोष्या ततस्तस्या अन्यथा भिन्ना परेद्युस्तदव्यापिनी सर्वथाऽसती वा पूर्व-विद्धेत्यर्थः। "ततोऽपरे"ति पाठान्तरम् उक्तार्थमेव। अयं भावः, यद्यपि द्वितीया कृष्णा पूर्वा शुक्ला परोपवासादि-सर्व-दैवेष्विति सामान्य-निर्णयस्तथापि आद्या तत्र पूर्वा ( यदि ? ) त्रि-मुहूर्तात्मके पूर्वाह्णे प्रविष्टा चेत्तदैव नो चेत् साऽपि परैव, यदि सापि पर-दिने त्रि-मुहूर्ताऽस्ति ततो न्यूनत्वे सर्वथाऽभावे वा पूर्वैव। एवं शुक्लापि पर-दिने त्रि-मुहूर्त-सत्त्वे परा ततो न्यूना नास्त्येव वा यदि तदा सापि पूर्वैवेति ॥ ५३ ॥

तृतीयायां विशेषमाह रम्भेति। रम्भा-व्रतं ज्यैष्ठ-शुक्ल-तृतीयां विहितम्। तत्रोपवासानुपवास-रूपे सर्वत्र द्वितीया-विद्धैवेत्यर्थः। व्रतान्तरे रम्भा-व्रतान्योप-वासादि-सकल-दैव-कर्मसु चतुर्थी-विद्धैव ग्राह्येत्यर्थः। द्वितीया-विद्धा त्याज्येति भावः। इदमपि पर-दिने सत्त्वे, तदभावेऽनुकल्पमाह परेद्युरिति। "परेऽह्नि" इति पाठान्तरम्। अपिर्व्युत्-क्रमे व्रतान्तरेऽपीत्यर्थः ॥ ५४ ॥

---

The 3rd prakarana ends in the 1st half of the verse no. 51.

1. v. r. A त्रयात्मकम्। 2. v. r. B. व्याप्नुवती

मुहूर्त-मात्र-सत्त्वेऽपि दिने गौरी-व्रतं परे ।
शुद्धाधिकायामप्येवं गण-योग-प्रशंसनात् ॥ ५५ ॥

चतुर्थी तु परोपोष्या गणनाथ-व्रतस्य तु ।
मध्याह्न-व्यापिनी पूज्या तद्वन्नाग-चतुर्थ्यपि ॥५६॥

परेद्युरेव मध्याह्न-व्याप्तौ विघ्नस्य सोत्तरा ।
अन्यथा पूर्व-विद्धैव मातृ-योग-प्रशस्तितः ॥५७॥

तत्र गौरी-व्रते चतुर्थी-युता यदि न लभ्यते तदा, तदन्य-व्रतेषु तु[1] त्रि-मुहूर्ता-लाभे । तथा च रम्भा-व्रतान्य-गौरी-व्रतेषु पूर्व-विद्धायास्त्याज्यत्वमुत्तर-विद्धाया ग्राह्यत्वं यत्र तत्र त्रि-मुहूर्तादरः[2] । किं त्वल्प-विद्धत्वम्[3] अल्पत्वं[4] च मुहूर्त-रूपमिति केचित्तन्मतमाह मुहूर्तेति । गौरी-व्रतमित्यनेनान्यत्र व्रते त्रि-मुहूर्तादर एवेति सूचितम् । तथा च गौरी-व्रतेऽपि त्रि-मुहूर्तादर एव "कला काष्ठापी" त्यपि-शब्द-स्वरसादिति गूढाभिमतम् । विद्धायां गौरी-व्रत उक्तं न्यायमन्यत्र केचिन्मतेनैवातिदिशति शुद्धेति। एवं पर-दिने गौरी-व्रतम् । गणो गणपतिस्तद्देवताका चतुर्थी । अत्र प्रशंसनादित्यनेनार्थवादवत् स्वार्थे तात्पर्याभाव इति तत्र पूर्वैवेति गूढाभिमतं सूचितम्[5] ॥ ५॥

चतुर्थ्या विशेषमाह चतुर्थी त्विति । परा पञ्चमी-युता । अत्रोपवासो व्रतान्तरस्याप्युपलक्षणम् । इदञ्च गणेश-नाग-गौरी-व्रतोपवास-पूजान्य-विषयकम् । तदेवाह क्रमेण गणेत्यादि । अधिकरणस्य सम्बन्धित्वेन विवक्षया षष्ठी । पूज्या ग्राह्या ॥५६॥

तत्राद्ये विशेषमाह परेद्युरेवेति । व्याप्तौ सम्पूर्णायामेकदेशेऽप्यधिकायां वा । सा चतुर्थी । अन्यथा अन्येषु पक्षेषु ॥५७॥

---

1. तु not found in B.
2. v.r. B. त्रिमुहूर्तग्रह: ।
3. v.r. A. किन्त्वल्प-विद्धत्वे ।
4. v. v. A. अल्पत्वे च ।
5. v.r. इति केचित् । वस्तुतस्तु मुहूर्त-मात्रेति पूर्व-विद्धा-विषयम् । तत्र तथैव शिष्टाचारादित्यग्रे स्फुटम् । शुद्धाधिकायामिति तु पूर्व-दिने घटिका-त्रयोत्तरं प्रवृत्त-विषयम् तदा तस्या: खण्डात्वेऽपि द्विविध-विद्धत्वाभावेन पूर्णावत् शुद्धात्वात्, न तु पूर्णापरं तस्यास्तत्वेन संपूर्णा-खण्डयो: संपूर्णाया असन्देहत्वेन असंजात-विरोधित्वेन च (प्राबल्यात् ? ग्राह्यत्वात् ) अत एव गणेति हेतुरवै वोक्तो न तु मध्ये ग्रन्थकाराणां तथैव श्रुति:(?) सत्वात् एवं तत्र नि:सन्दिग्धं पूर्वे वात एव विद्धिन्यायेन तत्रापि सिद्धाभिदेनास्यार्थ माख्याने(?) चर्चापि न क्रियेति माधवासाङ्गत्यं विवेचनकाराद्युक्तम् अयुक्तमिति बोध्यम् ।

पूर्वेद्युरेव तद्व्याप्तौ पूर्व-सर्प-प्रिया तिथिः ।
नो चेत् सर्पस्य पञ्चम्या योगोऽत्यन्तं प्रशस्यते ॥५८॥
गौर्याः शुद्ध-जयाप्यस्तु नाग-विद्धा निषिध्यते ।
सर्वत्र पञ्चमी पूर्वा ग्राह्या स्कन्द-व्रते परा ॥५९॥
नाग-विद्धा स्कन्द-षष्ठी सा निषिद्धा व्रतान्तरे ।
उत्तरस्या अलाभे तु नाग-विद्धैव गृह्यताम् ।
विना द्वादश-नाडीभिर्नाग-वेधो न दोषकृत् ॥६०॥

द्वितीये विशेषमाह पूर्वेद्युरेवेति । तद्व्याप्तौ प्राग्वद् द्वेधा मध्याह्न-व्याप्तौ । नो चेत् अन्येषु चतुर्षु पक्षेषु । सर्पस्य चतुर्थ्याः । पञ्चम्या अपि नाग-तिथित्वेन तद्योगस्य प्रशस्ततरत्वादित्यर्थः ॥५८॥

तृतीये विशेषमाह गौर्या इति । व्रते इति शेषः । शुद्धेति बहुव्रीहिः । अपिना विद्ध-जया, तद्देवत्य-तृतीया-योगस्य प्रशस्तत्वात्तृतीया-युतैवेत्यर्थः । बहुला-व्रतेऽप्येवमेव । अत्र हेतुमाह नागेति । यत इत्यादिः । तथा चात्र मध्याह्न-व्याप्ति-सत्त्वेऽपि सा अकिञ्चित्करेति भावः । प्रतिमास-क्रियमाण-संकष्ट-चतुर्थी-व्रते तु चन्द्रोदय-व्यापिनी ग्राह्या । दिन-द्वये तद्व्याप्तौ तदव्याप्तौ वा पूर्व-विद्धा, मातृ-विद्धा-प्राशस्त्यात् । पञ्चम्यां विशेषमाह सर्वत्रेति । नाग-व्रते उपवासादि-सर्व-कर्मसु चतुर्थी-विद्धैवेत्यर्थः । परेति । सापि त्रि-मुहूर्त-सत्त्वे । अन्यथा तु पूर्वैवेति हेमाद्रिः । कृष्णा पूर्वा शुक्ला परेति तु गौडाः । उपवासे पूर्वा, तदन्य-कर्मसु परेत्यपि पक्षान्तरं हेमाद्रिः ॥५९॥

षष्ठ्यां विशेषमाह नागेति । षण्मुहूर्त-पञ्चमी-युतापि पूर्वैवेत्यर्थः । सा नाग-विद्धा । व्रतान्तरे स्कन्द-व्रतातिरिक्ते सर्वत्रोपवासादौ । तथा च तत्र सप्तमी-विद्धैवेति भावः । तत्रानुकल्पमाहोत्तरेति । अत्र निषिद्धत्वेन त्याज्यत्वं[1] षण्मुहूर्त-पञ्चमी-विद्धाया एव न तु त्रि-मुहूर्त-विद्धाया अपि "नागो द्वादश-नाडीभिरि"ति स्कान्दात् । तदाह विनेति । अयञ्च षण्मुहूर्त-पञ्चमी-विद्ध-निषेधो

1. v.r. B. त्याज्यात्वं ।

सप्तमी पूर्व-विद्धैव व्रतेषु निखिलेष्वपि।
अलाभे पूर्व-विद्धायाः पर-विद्धैव गृह्यताम् ॥६१॥
व्रत-मात्रेऽष्टमी कृष्णा पूर्वा शुक्लाऽष्टमी परा।
दूर्वाष्टमी तु शुक्लापि पूर्व-विद्धा विधीयते ॥६२॥
पक्ष-द्वयेऽप्युत्तरैव शिव-शक्ति-महोत्सवे।
ज्येष्ठर्क्ष-योगे पूर्वापि ग्राह्या ज्येष्ठा-व्रते तिथिः ॥६३॥
मध्याह्नादूर्ध्वमृक्षं चेत् परेद्युः सा प्रशस्यते।
ज्येष्ठर्क्ष-भानु-वाराभ्यां युक्ताऽष्टम्यतिदुर्लभा ॥६४॥

नक्तैक-भक्तादि-भिन्न-विषय इति हेमाद्रिः। तदपि पूर्व-दिन एव मध्याह्नादि-व्याप्तौ द्रष्टव्यम् ॥६०॥

सप्तम्यां विशेषमाह सप्तमीति। उपवासादि-सर्व-कर्मस्वित्यर्थः। अनुकल्पमाहालाभ इति। यदा पूर्वेद्युरस्तमय-पर्यन्ता षष्ठी परेद्युश्च क्षय-वशादष्टम्या विद्धा सप्तमी तदापि गुणानुरोधेन प्रधान-लोपस्यान्याय्यत्वान्निषेधमतिक्रम्याप्युत्तर-विद्धां गौणत्वेन स्वीकृत्य तद्दिवोपवासादिकं सर्वं कार्यमित्यर्थः ॥६१॥

अष्टम्यां विशेषमाह व्रतेति। मात्रं कार्त्स्न्ये, उपवासादि-सर्व-कर्मस्वित्यर्थः। तत्रादौ सामान्य-निर्णयमाहाष्टमीति। विशेषमाह दूर्वेति। अपिना कृष्णा, तथा च तत्र पक्षोऽकिञ्चित्कर इति भावः ॥६२॥

पक्ष-द्वयेऽपि शुक्ले कृष्णे च। शिवेति मिलित-शिव-शक्ति-दैवत्य-व्रते नवमी-युतैवेत्यर्थः। एतद्विषया एव सप्तमी-विद्धा-निषेधाः। ज्येष्ठर्क्षेति। [1]तद्-योगे विहिते ज्येष्ठा-व्रतेऽलक्ष्मी-निवृत्तयेऽलक्ष्मी-व्रते तिथिरष्टमी पूर्वापि ग्राह्ये-त्यर्थः। अपिना परा। तथा च यैव ज्येष्ठा-युता सैव[1] ग्राह्या पूर्वा परा वेति भावः। एतेन "पूर्वैवे"ति भट्टादि-धृत-पाठः प्रत्युक्तः। अत्र कन्यार्क-योगेण प्राशस्त्यं मासस्तु भाद्रश्चान्द्र एव। दिन-द्वये तद्योगेऽष्टम्यामेव न तु तद्युक्त[2]-तिथ्यन्ते, तिथेः प्राधान्याद् ऋक्षस्याङ्गत्वात्। अत्राष्टमी परैव ॥६३॥

दिन-द्वयेऽपि तद्योगे तु मध्याह्नादूर्ध्वम् ऋक्षयोग-सत्त्वे परा अन्यथा रात्रा-वपि तद्योगे पूर्वैवेति केचित्। यत्तु (केवल-ज्येष्ठर्क्षे दूर्ध्वम् ऋक्षयोग-सत्त्वे परा

1—1. B. This reading is disordery. 2. v.r. B. तद्युक्तः।

जयन्त्याख्यं व्रतं भिन्नं कृष्ण-जन्माष्टमी-व्रतात् ।
शुद्धा च सप्तमी-विद्धा त्येवं जन्माष्टमी द्विधा ॥६५॥
सप्तमी चेन्निशीथात् प्राग् विद्धा शुद्धाऽन्यथा भवेत् ।
शुद्धायां नास्ति सन्देहो विद्धा च त्रि-विधिष्यते ॥६६॥

अन्यथा रात्रावपि तद्योगे पूर्वैवेति केचित् यत्तु ?) केवल-ज्येष्ठर्क्षेऽपि विहितं व्रतान्तरं तत्तु मध्याह्नोत्तरमपि यद्दिने ज्येष्ठा-सम्बन्धस्तद्दिन एव, न्यूनत्वे तु पूर्व-दिन एव। तिथि-विषये तु मध्याह्नादूर्ध्वं[1]-सत्तावश्यकेत्ये तदुभय[2]-साधारणमाह मध्याह्नादिति। परेद्युरिति पूर्वान्वयि। [3]नील-ज्येष्ठामाह ज्येष्ठर्क्षेति। भानु-वार-युत-ज्येष्ठर्क्षस्यैव नील-ज्येष्ठेति नाम। केवल-ऋक्ष-व्रते इति केचित्। युक्ताऽष्टम्यति-दुर्लभा। "योगोऽष्टम्याः सुदुर्लभ" इति पाठान्तरम्! अयं भावः परेद्युरेव ऋक्ष-योगे सामान्य-निर्णय एव, पूर्वेद्युरेव तस्मिन् तमुपेक्ष्य पूर्वा ग्राह्या। स च ऋक्ष-योगो[4] यदि परेद्युर्मध्याह्नादूर्ध्वमनुवर्तते तदा पूर्व-दिने रात्रौ तद्योगमुपेक्ष्य परैव। यदा भानु-वार-योगस्तदा पूर्वेद्युः रात्रौ ऋक्ष-योगं परेद्युर्मध्याह्नादूर्ध्वम् ऋक्ष-योगं चोपेक्ष्य भानु-ज्येष्ठा-योगेन निर्णय इति ॥ ६४ ॥

अथ जयन्ती-जन्माष्टमी-व्रतयोर्निर्णयं कर्तुं व्रतैक्यमिति पर-मत-निरासाय भेदमाह जयन्त्याख्यमिति। तत्र तदर्थं जन्माष्टमी-भेदमाह शुद्धा चेति। चो व्युत्-क्रमे ॥ ६५ ॥

अत्र वेधे[5] विशेषमाह सप्तमी चेदिति। सूर्यास्तोत्तरं निशीथादर्वाक् कियत्यपि सप्तमी चेत्तदाऽष्टमी विद्धा, अन्यथा ततः प्राक् तत्र कियत्या अपि तस्या असत्त्वे शुद्धेत्यर्थः। यद्यपि प्राग् दिवैव वेध उक्तस्तथापि रात्रि-कर्मणि रात्रि-वेधोऽपीति भावः। शुद्धायामिति तत्रेत्यादिः। विद्धायास्तदर्थं भेदमाह विद्धा चेति। चस्त्वर्थे ॥ ६६ ॥

1. v.r. A. मध्याह्नार्ध्वं ।
2. v.r. B. आवश्यकेत्यनेतदुभय(?) ।
3. v.r. B. सा परा ।
4. v.r. B. योगे(?) ।
5. v.r. B. वेध ।

निशीथ-योग: पूर्वेद्युः परेद्युर्वा द्वयोरुत ।
पूर्वैव प्रथमे पक्षे परैवोत्तर-पक्षयो:[1] ॥६७॥

अष्टमी रोहिणी-युक्ता जयन्ती सा चतुर्विधा ।
शुद्धा शुद्धाधिकेत्येवं विद्धा विद्धाधिकेति च ॥ ॥६८॥

शुद्धायामपि विद्धायां न सम्भाव्योत्तरा तिथि: ।
शुद्धाधिकायां योग: स्यादेकस्मिन्[2] वा दिन-द्वये ॥६९॥

नैक-योगेऽस्ति सन्देहो द्वि-योगे प्रथमं दिनम् ।
सदा निशीथे पश्चाद्वेत्युत्तमो मध्यमोऽधम: ॥७०॥

अवधारणमुभयत्र बोध्यम् । अत एवाह द्वयोरिति । उत वा ॥ ६ ॥

जयन्त्या: स्वरूपं भेदं चाहाष्टमीति ॥ ६८ ॥

तत्राद्ये तृतीये च पक्षे न सन्देह इत्याह शुद्धायामपीति । अपिर्व्युत्क्रमे । द्वितीय-पक्षस्यावान्तर-भेदं सनिर्णयमाह शुद्धेति । योग: स्यादिति [3]रोहिण्या सहेत्यादि: । 'योगश्चेदि'ति[4] क्वचित् पाठ: ॥ ६९ ॥

तत्राद्ये न सन्देह इत्याह नैकेति । एकस्य दिनस्य रोहिणी-योगे इत्यर्थ: । पूर्वेद्युरेव परेद्युरेव वा तत्रेति यावत् । तदा तद्योगवत्या[5] एव ग्राह्यत्वान्न स इति भाव: । द्वि-योगे द्वयोर्दिनयो रोहिणी-योगे । सम्पूर्णत्वादाह प्रथममिति । नक्षत्र-योगस्यावान्तर-भेदास्तु तिथि-निर्णयोपयुक्ता न भवन्तीति सूचयन् तद्योग-त्रैविध्यमाह सदेति । शुद्धाधिकायां सदा अहोरात्रे । पूर्व-दिने सूर्योदयमारभ्य प्रवृत्तो नक्षत्र-योग: परेद्युरुदय-पर्यन्तमनुवर्तमान उत्तम: । निशीथेऽर्ध-रात्रे । निशीथमारभ्य प्रवृत्तो मध्यम: । पश्चान्निशीथानन्तरं, तदूर्ध्वं प्रवृत्तोऽधम: । एते त्रयोऽपि फल-तारतम्यायैवोपयुज्यन्ते ॥ ७० ॥

---

1. v.r.C. पक्षके ।
2. v.r.C. योगश्चेदेकस्मिन् ।
3. Not found in B.
4. v.r.B-C. योगवता ।
5. v.r.B-C. योगे ।

योगस्त्रिधापि पूर्वेद्युः सम्पूर्णत्वादुपोषणम् ।
विद्धाधिकायामप्येक-दिन-योगे स गृह्यताम् ॥७१॥
द्वयोर्योगस्त्रिधा भिन्नो निशीथे व्याप्ति-भेदतः ।
तद्व्याप्तिर्दिन एकस्मिन्नुभयोर्नोभयोरिति ॥७२॥
एकस्मिंश्चेत्तद्दिनं स्यात् पक्षयोरन्तयोः परम् ।
बुधे सोमे जयन्ती चेद् वारे साऽति[1]फल-प्रदा ॥७३॥
तिथ्यृक्षयोर्द्वयोरन्त[2] उत्तमं पारणं भवेत् ।
एकस्यान्ते मध्यमं स्यादुत्सवान्तेऽधमं स्मृतम् ॥७४॥

उपवासस्तु त्रिष्वपि पक्षेषु पूर्वत्रैवेति भावः। चतुर्थ-पक्षस्यावान्तर-भेदं सनिर्णयमाह विद्धेति। स एक-दिन[3]-योग एव। पूर्ववद् या योगवती पूर्वा परा वा[4] सैव ग्राह्येत्यर्थः ॥ ७१ ॥

दिन-द्वय-योग[5]-विभागमाह द्वयोरिति। तदेव व्याचष्टे तद्व्याप्तिरिति। एकस्मिन्नेव दिने पूर्वत्रैव परत्रैव वा निशीथे रोहिणी-योगः, दिन-द्वये तत्र सः, नोभयोस्तत्र स इत्यर्थः ॥ ७२ ॥

तत्र निर्णयमाहैकस्मिंश्चेदिति। एकस्मिन्नेव दिने[6] पूर्वत्र परत्र वा विद्धाधिकायां[7] निशीथे रोहिणी-योगे तदेव दिनं ग्राह्यम्, उभयोर्नोभयोरिति पक्षयोः परं दिनमित्यर्थः। वार-विशेष-योगोऽपि[8] फलाधिक्याय न तु तिथि-निर्णयायेत्याह बुधे इति। बुधे सोमे वा वारे इत्याद्यर्थः ॥ ७३ ॥

जयन्त्यां[9] पारणा-निर्णयमाह तिथ्यृक्षयोरिति। अन्ते समाप्तौ। उत्सवान्ते पूजोपवास-जागरण-रूप उत्सवस्तत्-समाप्तौ, द्वितीय-दिने प्रातःकाले ॥ ७४ ॥

1. v.r.D. सति।
2. v.r.C. द्वयोरन्तम्।
3. v.r.B. दिनायोग।
4. v.r. A. no पूर्वा परा वा।
5. Not found in B.
6. दिने not found in B.
7. v.r.B. विद्धाधिकाया।
8. v.r.B. योगस्तु।
9. v.r. A. no जयन्त्यां।

**यस्मिन् वर्षे जयन्त्याख्यो योगो[1] जन्माष्टमी तदा ।**
**अन्तर्भूता जयन्त्यां स्यात्तत्त-योग-प्रशस्तित: ॥७५॥**
**नवमी पूर्व-विद्धैव पक्षयोरुभयोरपि ।**
**मध्याह्ने राम-नवमी पुनर्वसु-समन्विता ॥७६॥**

जन्माष्टमी-जयन्त्योर्यथोक्त-निर्णयानुसारेण कदाचिदुपवास-द्वय[2]-प्रसङ्गेन प्राप्तमङ्ग-वैगुण्यं वारयति यस्मिन्निति । जयन्त्याख्य: अष्टमी-रोहिणी-योग-रूप: । तदा तस्मिन् वर्षे । तद्व्रतानुष्ठानेनैव तद्व्रत-सिद्धे: । वैपरीत्यं वारयति कृत्स्नेति । एतेन "जन्माष्टम्या अपि रोहिणी-योगेनैव ग्राह्यत्वोक्तेरित्यर्थ" इति व्याख्यानमपास्तम् । तथा चाष्टमी-रोहिण्योर्योगाभावे जन्माष्टमी-व्रतमेवानुष्ठेयम्, न तु जयन्ती-व्रतं, तत्स्वरूपस्यैवाभावात् । सत्यपि तद्योगे पूर्वोक्त-निर्णयानुसारेण यदि कदाचिदेकस्मिन्नेव दिने व्रत-द्वय-प्राप्तिस्तदोपवासस्य तन्त्रेणानुष्ठेयत्वान्नोपवास-द्वयम् । यदापि उक्त-निर्णयानुसारेण जन्माष्टमी पूर्व-दिने जयन्ती पर-दिने, तदा पूर्व-निर्णयमुपेक्ष्यालभ्य-योग-वशात् पर-दिन एव तदनुष्ठानमिति[3] भाव: ॥ ७५ ॥

नवम्यां विशेषमाह नवमीति । सर्व-कार्येष्वित्यर्थ: । राम-नवमीमाह मध्याह्ने इति । स च पञ्चधा-विभागेन । त्रेधा-विभागेनेति कश्चित् । आवर्त-नाख्य-मुहूर्त एवात्र मध्याह्न:, कृष्णाष्टम्यां मध्य-रात्रवदिति परे । तथा च मध्याह्न-व्यापिनी ग्राह्या । दिन-द्वये[4] मध्याह्न-व्याप्तौ तदव्याप्तौ तदेक-देश-व्याप्तौ वा[5] पुनर्वसु-युता सा ग्राह्या । तादृश्या दिन-द्वयेऽपि पुनर्वसु-योगे मध्याह्ने तद्योगवती ग्राह्या । दिन-द्वयेऽपि मध्याह्ने तद्योगे मध्याह्नं विहाय वा तद्योगे सर्वथाऽयोगे चोत्तरैव । इयं सर्वान् प्रति नित्येत्येके । रामोपासकान् प्रत्येव तथेत्यन्ये ॥ ७६ ॥

---

1. v.r.C. जयन्त्याख्य-योगी ।
2. v.r.A. no द्वय ।
3. Add.r. A. न तदिति
4. v.r.B. दिन-द्वय- ।
5. v.r.B. या ।

ग्राह्या नैवाष्टमी-युक्ता सनक्षत्रापि वैष्णवैः ।
कृष्णा पूर्वोत्तरा शुक्ला दशम्येवं व्यवस्थिता ॥७७॥
जयन्ती-व्रतवन्नित्यं काम्यं चैकादशी-व्रतम् ।
अरुणोदय-वेधोऽत्र वेधः सूर्योदये तथा ॥७८॥
उक्तौ द्वौ दशमी-वेधौ वैष्णव-स्मार्तयोः क्रमात् ।
कला-काष्ठादि-वेधोऽपि ग्राह्योऽत्र त्रि-मुहूर्तवत् ॥७९॥
वैखानसाद्यागमोक्त-दीक्षां प्राप्तो हि वैष्णवः ।
विद्धा त्याज्या वैष्णवेन शुद्धाप्याधिक्य-सम्भवे[1] ॥८०॥

वैष्णवान् प्रति विशेषमाह नैवेति। दशमी तु दिन-द्वयेऽपि कर्म-काल-व्यापिनी परा[2] पूर्वा वा यथेच्छया ग्राह्या। अन्येषु पक्षेषु पूर्वेति **हेमाद्रिः**। तत्र कर्म-काल-व्याप्त्याऽनिर्णये आह कृष्णेति। दशमी सर्वापि पूर्वेवेत्यन्ये। एकादशी तु सर्व-कार्येषु द्वादशी-युतैव ॥ ७७ ॥

तत्रोपवासे तन्निर्णयं वक्तुमाह जयन्तीति। तद्वदुभय-स्मरणात्। नैवं जन्माष्टम्या इति तत्त्यागः। अथाधिकारि-भेदेन तिथि-भेद-निर्णयार्थमेव विलक्षण-वेध-द्वयमाह अरुणोदेति। अत्र एकादश्याम्[3]। उदयात् प्राक् चतस्रो नाडिका अरुणोदयः, तत्र दशमी-प्रवेशे अरुणोदय-वेधः। सूर्योदये तत्-प्रवेशे सूर्योदय-वेधः ॥ ७८ ॥

तिथ्यन्तरेष्विवात्र वेधे त्रि-मुहूर्तत्व-नियमो नास्तीत्याह कलेति। अत्र एकादश्याम् ॥ ७९ ॥

ननु विष्णु-भक्तः साधारणत्वादरुणोदय-वेधाधिकारी को वैष्णव इत्यत आह वैखेति। आदिना नारद-पाञ्च-रात्रादि। हि प्रसिद्धौ, तेनाप्रसिद्ध-वैष्णवोऽपि भागवताख्यः सूचितः। यद्यपि स स्मार्त एव तथापि तेन सूर्योदय-विद्धा-

1. v.r.C. सम्भवात् ।
2. परा not found in C.
3. v.r. A. एकाद्दे ।

एकादशी द्वादशी वाऽधिका चेत्[1] त्यज्यतां दिनम् ।
पूर्वं ग्राह्यं तूत्तरं स्यादिति वैष्णव-निर्णयः ॥८१॥
एकादशी द्वादशी चेत्युभयं वर्धते यदा ।
तदा पूर्व-दिनं त्याज्यं स्मार्तैर्ग्राह्यं परं दिनम् ॥८२॥
एकादशी-मात्र-वृद्धौ गृहि-यत्योर्व्यवस्थितिः ।
उपोष्या गृहिभिः पूर्वा यतिभिस्तूत्तरा तिथिः ॥८३॥
द्वादशी-मात्र-वृद्धौ तु शुद्धा-विद्धे व्यवस्थिते ।
शुद्धा पूर्वोत्तरा विद्धा स्मार्त-निर्णय ईदृशः ॥८४॥
श्रवणेन युता चेत् स्याद् द्वादशी सा हि वैष्णवैः ।
स्मार्तैश्चोपोषणीया स्यात्त्यजेदेकादशीं तदा ॥८५॥

वदरुणोदय-विद्धाऽपि सर्वथा त्याज्या इति-मात्र-बोधनमत्र तत्-सूचन-फलम् । प्रसिद्धं तं प्रति निर्णयमाह विद्धेति । वैष्णवेन विद्धा सर्वथैव त्याज्येत्यर्थः । शुद्धायां[2] त्याज्यत्वं न सार्वत्रिकमित्याह शुद्धापीति ॥ ८० ॥

अत्राऽऽधिक्यं त्रेधेत्याह एकेति । तन्मात्राधिकेत्याद्यर्थः । पूर्वमिति पूर्वान्वयि । आधिक्यं चात्र द्वितीय-दिने सूर्योदये भवनं[3] । वक्ष्यमाणोभय-वृद्धि-संग्रहाय प्रथम-दिने सूर्योदये सत्त्वं न निवेशितम्[4] ॥८१॥

स्मार्तं प्रति निर्णयमाहैकेति । साम्य-त्वययोराह उभयमिति ॥८२॥

व्यवस्थामेवाहोपोष्येति । सुकरोऽयं श्लोकः ॥८३॥

तामेवाह शुद्धेति ॥८४॥

यदा द्वादश्यां[5] श्रवणो नक्षत्रं तदा शुद्धैकादशीमपि त्यक्त्वा द्वादश्यामेवोपवसेदिति यथोक्त-निर्णयस्य तत्रापवादमाह श्रवणेनेति[6] ॥८५॥

---

1. v.r.C. वै । 2. A. शुद्धायामपि 3. v.r.B. पाप-भेदैनोभयाधिकाग्रहणं ।
4. Not found in B. 5. Add.r.B. एव ।
6. v.r. A. यदि सा तेन युता स्यात् तदैकादशीं त्यजेत्······ ।

उपवास-व्रतादन्य-व्रते सार्ध-मुहूर्तकैः ।
सप्तभिर्दशमी-विद्धामेतामेकादशीं त्यजेत् ॥८६॥
द्वादशी पूर्व-विद्धैव व्रतेषु निखिलेष्वपि[1] ।
शुक्ल-त्रयोदशी पूर्वा परा कृष्णा त्रयोदशी ॥८७॥
अलाभे सापि पूर्वैव पराऽनङ्ग-त्रयोदशी ।
या शुक्ला गृह्यते पूर्वा गृह्यतां सापराह्णिकी ॥८८॥
चतुर्दश्युत्तरा शुक्ला पूर्वा कृष्ण-चतुर्दशी ।
उदये द्वि-मुहूर्तापि ग्राह्याऽनन्त-व्रते तिथिः ॥८९॥

व्रतान्तरेषु एतत्तिथि-निर्णयमाहोपेति । पर-विद्धा ग्राह्येति भावः ॥८६॥

द्वादशी-निर्णयमाह द्वादशीति । तत्र यद्येकादशी-द्वादश्युपवासौ खण्ड-तिथित्वादेक-दिने प्राप्नुतस्तदोपक्रम-प्रभृति तन्त्रेण कार्यौ । यदा तु तिथि-खण्डत्वादुपवास-द्वयं नैरन्तर्येण प्राप्नोति तदा प्रक्रान्त-द्वादश्युपवासेन प्रधा-नानुरोधादेकादश्युपवासाङ्गं पारणं बाधित्वोपवास-द्वयं कार्यम् । अनुपक्रान्त-तदुपवासेन तु नोपक्रमितव्य एव स इत्येके । अद्भिः पारणं कृत्वोपक्रान्तोऽनुपक्रान्तो वा द्वादश्युपवासः कार्य एवेति मूल-मतं युक्तमित्यग्रे[2] स्फुटीभविष्यति । अन्य-तिथिष्वपि नैरन्तर्येणोपवास-द्वय-प्राप्तावयमेव निर्णयः । त्रयोदशी-निर्णयमाह शुक्लेति । उपवासादि-सर्व-कर्मस्वित्यर्थः ॥८७॥

अलाभे इति । द्वितीय-दिने त्रि-मुहूर्तालाभे । सापि कृष्णापि, पूर्वैवेत्यर्थः । परानङ्गेति मार्गशीर्ष-शुक्ल-त्रयोदशी पर-विद्धैवेत्यर्थः । 'पूर्वाऽनङ्गे'त्यपपाठः । या शुक्लेति । या शुक्ला त्रयोदशी पूर्वा ग्राह्यत्वेनोक्ता सा न सायाह्न-मात्र-व्यापिनी किं त्वापराह्णिकीत्यर्थः ॥८८॥

चतुर्दशी-निर्णयमाह चतुर्देति । उपवास-भिन्न-विषयमिदम् । उपवासे तु पक्ष-द्वयगापि परैव । विशेषमाहोदये इति । 'द्वि-मुहूर्तापी'ति पाठः[3] । अपिना त्रि-मुहूर्ता । दिन-द्वये तदप्राप्तौ पूर्वैव सम्पूर्णत्वात् । दिन-द्वये तदेक-देश-व्याप्तौ या कर्म-काल-व्याप्ता सैव, अन्यथा पूर्वैव, मध्याह्न-गौण-कालोभय-व्याप्तेः ॥८९॥

---

1. v.r.C. निखिलेषु व्रतेष्वपि । 2. इति not found in B. 3. v.r.B. द्विमुहूर्तेत्यपपाठः ।

शुक्लापि रात्रि-युक्ता स्याच्चैत्र-श्रावण-मासयो: ।
शुक्ला सर्वाऽपि पूर्वैव यदि स्यादापराह्णिकी ॥६०॥

प्रदोषे वा निशीथे वा द्वयोर्वा याऽस्ति सा भवेत् ।
शिव-रात्रि-व्रते तत्र द्वयो: सत्ता प्रशस्यते ॥६१॥

तदभावे निशीथैक-व्याप्ताऽपि परिगृह्यताम् ।
तस्यास्त्वासम्भवे ग्राह्या प्रदोषव्यापिनी तिथि: ॥६२॥

तिथ्यन्ते पारणं याम-त्रयादर्वाक् समापने ।
अन्यथा पारणं प्रातरन्य-तिथ्युपवासवत् ॥६३॥

दमनक-पवित्रारोपणयोराह शुक्लापीति । पूर्वैवेत्यर्थ: । इदमपि दिवा-सत्त्वे इति केचित् । रुद्र-दैवत्योपवासे आह शुक्लेति । सर्वा शुक्लापीत्यर्थ: । अपिना कृष्णा । तथा च पक्ष-द्वयगेत्यर्थ: । आपराह्णिकत्वलाभे त्वत्रापि परैवेति यदीत्यनेन सूचितम् । [1]एवं कृष्णापि पूर्वालाभे परैवेति बोध्यम्[1] ॥६०॥

शिव-रात्रि-निर्णयमाह प्रदोषे इति । शिव-रात्रि-व्रते इति पूर्वान्वयि । नायमैच्छिक-विकल्प:, किन्तु व्यवस्थित इत्याह तत्रेति । तेषां मध्ये इत्यर्थ: । तथा चोभय-व्याप्तिवत्त्वमिति भाव: ॥६१॥

तदभावे उभय-व्याप्त्यभावे । निशीथैक-व्याप्ताऽपि परिगृह्यताम् । अपिनोक्ताया एव समुच्चय: । '०थैक-व्यापिनी गृह्यतां तिथिरि'ति पाठान्तरम् । "निशीथैके"ति प्रयोगो बाहुलकात् । तथा च केवल-निशीथ-व्याप्तिर्मध्यमेति भाव: । तस्या निशीथ-व्याप्ते: । चस्त्वर्थे व्युत्क्रमे च, असम्भवे तु । तथा चेयमधमेति भाव: ॥६२॥

अत्र पारणायां प्रतिपन्नायमतिदिशति तिथ्यन्त इति । "समापने" इति पाठ: । सतीति शेष: । अन्यथा तत्रासमाप्तौ ॥६३॥

1-1. Not found in B.

पूर्व-विद्धैव सावित्री-व्रते पञ्चदशी तिथिः ।
नाड्योऽष्टादश भूतस्य स्युश्चेन्न च[1] परेऽहनि ।
व्रतान्तराणि सर्वाणि परेऽहन्येव सर्वदा ॥९४॥
श्राद्धेऽपराह्ण-कालीनो दर्शं आब्दिकवन्मतः ।
दिन-द्वयेऽप्येक-देशे वृत्तौ ग्राह्यो महत्त्वतः ॥९५॥
तुल्यत्वं चेदेक-देशे क्षये पूर्वोऽन्यथोत्तरः ।
कृत्स्न-व्याप्तौ द्वयोरङ्गोकृत्तरस्तिथि-वृद्धितः ॥९६॥

पञ्चदशी-निर्णयमाह पूर्वेति । पञ्चेति शुक्ला कृष्णा चेत्यर्थः । अत्र पूर्व-विद्धयोः कर्तव्यमपि सावित्री-व्रतं नव[2]-मुहूर्तात्मक-भूत-विद्धयोर्न कार्यमिति पर-मतासाङ्गत्य-विधानायाह नाड्य इति । "चेन्न च[3] परेऽहनी"ति पाठः । चेच्चेत्य-न्वयः, स्युर्यद्यपीति तदर्थः । पूर्वान्वयीदम् । तादृश-स्थले तत्फलितम् एव-व्यवच्छेद्यमेव परोक्तं स्पष्टार्थं निषेधयन्नाह न परेऽहनीति । तथा च यत्र भूत-विद्धा निषिद्धा, तत्र तद्वचन-प्रवृत्त्या तावद्विद्धा न कार्या, इदन्तु तावद्वेधेऽपि कार्यमेवेति भावः । "तत्र परेऽहनी"ति पाठेऽपि तस्मिन् परे उत्कृष्टे पर्व-रूपेऽहनि तस्य ताः स्युर्यद्यपीत्यर्थः । एतेनान्यथा व्याख्यानं सर्वेषामत्रापास्तम् । सर्वाणि उपवासादीनि, शुक्ले कृष्णे चेति भावः । सर्वदा तादृश-वेधे सत्यसति च ॥९४॥

आब्दिक-निर्णयं दर्शेऽतिदिशति श्राद्ध इति । द्व्यपराह्ण-स्पर्श[4]-भिन्न-पञ्च-पक्षेषु दर्शाधिकरणक-श्राद्धे दर्शः अपराह्ण-कालीनः आब्दिकवत् तत्र प्रतिपत्तिथि-वत् मत इष्ट इत्यर्थः, तत्र तद्वन्निर्णय इति यावत् । तदेव स्पष्टार्थमाह दिनेत्या-दिना । वृत्तौ प्रवृत्तौ ॥९५॥

एकदेश-सम-व्याप्तावाह तुल्यत्वमिति । खर्वादि-वाक्य-मूलकमाह क्षये इति । अन्यथा वृद्धि-साम्ययोः । अत्र क्षयादि-ग्राह्य-तिथेरेव प्रत्यासत्तेः सम्भवाद् बाधकाभावाच्च । अत्र साम्य-क्षययोरसम्भवादाह वृद्धित इति ॥९६॥

1. v.r.C. स्युश्चेन्न ।
2. v.r.A. नव ।
3. च not found in B.
4. B. द्व्यपराह्णास्पर्श।

साग्न्यनग्नि-व्यवस्था स्यान्न स्याच्चेदपराह्णयोः[1] ।
पूर्वेद्युः साग्निकः कुर्यादुत्तरेद्युरनग्निकः[2] ॥९७॥
पर्व-प्रतिपदोः सन्धिर्मध्याह्ने वा ततः पुरा ।
अन्वाधानं पूर्व-दिने यागः सन्धि-दिने भवेत् ।
ऊर्ध्वं मध्याह्नतः सन्धावन्वाधानं तु[3] तद्दिने ॥९८॥
इष्टिं पर-दिने कुर्यादन्यो वाजसनेयिनः ।
यस्तु वाजसनेयी स्यात्तस्य सन्धि-दिनात् पुरा ।
न काप्यन्वाहितिः[4] किन्तु सदा सन्धि-दिने हि[5] सा ॥९९॥
सन्धिश्चेत् सङ्गवादूर्ध्वं प्राक् पर्यावर्तनाद्रवेः[6] ।
सा पौर्णमासी विज्ञेया सद्यःकाल-विधौ[7] तिथिः ॥१००॥

तदस्पर्श-रूप-षष्ठ-पक्षे साग्न्यनग्नि-कृत-व्यवस्था-रूप आह्निकाद् विशेष इत्याह साग्नीति । अधिकारि-व्यवस्थया तद्-व्यवस्थेत्यर्थः । तामेव वैपरीत्य-भ्रम-निरासायाह पूर्वेद्युरिति । साग्निकः श्रौताग्निमान् स्मार्ताग्निमांश्च । अनग्निकः द्विविधः, उत्सन्नाग्निः स्त्री-शूद्रश्च ॥९७॥

अथेष्टौ पर्व-निर्णयमाह पर्वेत्यादिना निर्णय इत्यन्तेन । तत्रादौ प्रकृति-काल-निर्णयश्चरमार्द्ध-न्यूनेन । वा व्युत्क्रमे[9] ततः पुरा वा । तुर्व्युत्क्रमे सन्धौ तु[10] ॥९८॥

अयं माध्यन्दिन-भिन्न-विषय इत्याहान्य इति । तं प्रत्याह यस्त्विति । पुरा पूर्व-दिने । हितिरित्यन्तं पूर्वान्वयि । हिरेवार्थे । तु इति पाठेऽप्येवम् । सा अन्वाहितिः ॥९९॥

पूर्णिमायां विशेषमाह सन्धिश्चेदिति । सङ्गवात् पञ्चधा-विभक्तैक-देश-विशेषात् । पर्यावर्तनम् अह्नोऽष्टमं मुहूर्तम् ॥१००॥

---

1. I. न चेत् स्यादपराह्णयोः । 2. I. निरग्निकः । 3. H. and C. हि । 4. D. काप्यन्वाहितिः । 5. v.r. तु । 6. I. and H. प्राक् चेदावर्तनाद्रवेः । 7. D. सद्यस्काल-विधौ । 8. i. e. up to the end of the first half of verse no. 104; *vide infra.* 9. v.r. चरमार्द्ध-न्यूने न्यूनेन वा व्युत्क्रमेण । 10. v.r. B. हिपाठेऽप्येवम् ।

वृद्धिः प्रतिपदो याऽस्ति तदर्धं पर्वणि क्षिपेत् ॥
क्षयस्यार्धं तथा हित्वा[1] सन्धिर्निर्णीयतां सदा ॥१०१॥
बौधायन-मते दर्श-श्राद्धं चेष्टिर्विशिष्यते ।
द्वितीया त्रि-मुहूर्ता चेत् प्रतिपद् यापराह्णिकी[2] ॥१०२॥

अन्वाधानं चतुर्दश्यां दर्शे स्वल्पेऽपि वर्तयेत् ।
दर्श-श्राद्धं तदा[3] कार्यमिति बौधायनोऽब्रवीत्[4] ॥१०३॥

सन्धि-विषये कश्चिद् विशेषमाह वृद्धिरिति । यदा घटिका-न्यूने मध्याह्ने पर्व-समाप्तिः परेद्युश्च घटिका-चतुष्टय[5]-वृद्धि-वशान्मध्याह्नादूर्ध्वं घटिका-त्रयं प्रतिपदनुवृत्तिस्तदा घटी-चतुष्टय-वृद्धेरर्धं-घटी-द्वयस्य पर्वणि प्रक्षेपे पूर्वेद्युर्मध्याह्नादूर्ध्वं [6]पर्वानुवृत्तावनुष्ठाने विशेषः—सन्धि-दिनेऽन्वाधानं परेद्युरिष्टिरिति । तदभावे तु पूर्वेद्युरन्वाधानं सन्धि-दिने इष्टिरिति । यदा मध्याह्नादूर्ध्वं घटी-मात्र[6]-पर्वानुवृत्तिः परेद्युश्च घटी-चतुष्टय-प्रतिपदुपचयस्तदा तस्य क्षयस्यार्धस्य घटी-द्वयस्य प्रक्षेपे मध्याह्नात् पूर्वं घटीतः सन्धिर्भवति, तत्र स्वाभाविक-सन्ध्यनुसारे सन्धि[7]-दिनेऽन्वाधान-प्राप्तिः क्षय-प्रक्षेपे तु सन्धि-दिने इष्टिरिति विशेषः ॥ १०१ ॥

एवमाश्वलायनादि-मते दर्श-श्राद्धमिष्टिश्च[8] निर्णीय मतान्तरे तन्निर्णयमाह बौधेति । चो व्युत्क्रमे इष्टिश्च । तदुक्तिमेवाह द्वितीयेति । या प्रतिपत् आपराह्णिकी ततो द्वितीया यदि सूर्यास्तात् प्राक् त्रि-मुहूर्ता तदा सा प्रतिपदिष्टि-योग्या न किन्तु ततः पूर्व-दिनम् ॥ १०२ ॥

अत एवाह अन्वेति । तत्र दर्शे स्वल्पेऽपि सति तत् कुर्यादित्यर्थः । अपिना तदसत्त्वेऽपि । तदा स्वल्पामोपेत-चतुर्दश्याम् । तथेति पाठे यथा तात्कालिकमन्वाधानं तात्कालिकं तद्वद् दर्श-श्राद्धमित्यर्थः ॥ १०३ ॥

---

1. C. त्विषा । H. त्विषा । 2. I. प्रतिपच्चापराह्णिकी । 3. तथा । 4. H. बौधायनीदितम् । 5. v.r. B. चतुष्टयं वृद्धि । 6-6. v.r. A. Not found. 7. v.r. C. सन्धि-हिते । 8. v.r. B. प्रक्षतीष्टिं ।

इष्ट्यादि-विकृतिः सर्वा पर्वण्येवेति निर्णयः ।
पञ्चमे तु प्रकरणे पूर्वार्धे भादि-निर्णयः ।
उत्तरार्धे काल-भेदात् कर्म-भेदोपदेशनम्[1] ॥१०४॥
यस्मिन्नस्तमियाद्भानुस्तन्नक्षत्रमुपोषणे ।
मुख्यं तस्यासम्भवे तु ग्रहीतव्यं निशीथयुक् ॥१०५॥
उपवासे यदुक्तं स्यात्तद्धि नक्तैक-भक्तयोः ।
उदये त्रि-मुहूर्तस्थं नक्षत्रं व्रत-दानयोः ॥१०६॥
दिने द्वये[2] तथात्वे तु पूर्वं स्याद् बलवत्त्वतः ।
श्रवणं तूत्तरं ग्राह्यमुपाकरण-कर्मणि ॥१०७॥

अथ विकृतौ विशेषमाहेष्ट्यादीति । इष्टिर्दर्श-पूर्णमासेष्टिः प्रकृतिः । आदिना पशु-सोमौ । तेषां सर्वा त्रितय-रूपा विकृति"रैन्द्राग्नमेकादश-कपालं निर्वपेदि"त्यादि-विहिता । सा पर्वण्येवानुष्ठेया न तु प्रकृतिवदित्यर्थः ।

इति तुर्यं प्रकरणम् ॥

पञ्चम-प्रकरण-प्रतिपाद्यमाह पञ्चमे इत्यादिना । पूर्वार्धे पूर्व-भागे । भं नक्षत्रम् । आदिना योग-करण-वाराः । उत्तर-भागे काल-विशेषेण कर्म-विशेष-निरूपणमित्यर्थः, संक्रान्त्यादि-निरूपणमिति यावत् । एतेनान्यथा व्याख्यानं भट्टानामपास्तम् ॥ १०४ ॥

तत्र नक्षत्र-निर्णयमाह यस्मिन्निति । तत्रादावुपवासे निर्णय इत्याह्योपोषणे इति । मुख्यमिति पूर्वान्वयि । दिन-द्वय-सत्त्वेऽपीति भावः । अयं मुख्य-पक्षः । अत एवानुकल्पमाह तस्येति ॥ १०५ ॥

अथैक-भक्तादौ तमाहोपेति । उपवासे यथा नक्षत्र-निर्णयस्तथैव नक्तादौ न तु प्रदोष-मध्याह्न-व्याप्तिभ्याम् इत्यर्थः । अथ व्रतादौ तमाहोदये इति ॥१०६॥

दिने द्वये इति व्यस्त-पाठः । तथात्वे उदय-व्यापित्वे । बलवत्त्वतः संपूर्णाहोरात्र-व्यापित्वात् । उत्तरं धनिष्ठा-संयुतम् । कर्मणीति पाठः ॥ १०७ ॥

1. D. दर्शनम् । 2. V.r. दिन-द्वये ।

पित्र्ये तु तिथिवत् सर्वो नक्षत्रस्य विनिर्णयः
पूर्वः[1] स्यादुपवासादावुत्तरो व्रत-दानयोः ॥१०८॥

योगः श्राद्धे कर्म-काल-व्याप्तस्तु परिगृह्यताम् ।
करणं यद्दिने तत्तु ग्राह्यं रात्रौ यदा तदा ॥१०९॥

दिन-द्वयैक-भक्ताभ्या[2]मुपवासः प्रसिध्यति ।
वारेषु संशयाभावाद् ग्रहीतव्यं यथास्थितम् ॥११०॥

आसन्न-नाड्यः संक्रान्तेः पुण्याः स्नानादि-कर्मसु ।
चरेषु[3] कर्कटे पूर्वा मकरे विंशतिः पराः ॥१११॥

पित्र्ये त्विति, अपराह्ण-व्याप्त्यादेरिति भावः । विष्कम्भादि-योग-निर्णयमाह पूर्व इति, पूर्व-दिन-सम्बन्धीत्यर्थः । पूर्व-दिनेऽस्तमय-व्याप्त इति यावत् । निशीथ-मात्रतो व्याप्तस्तु नक्षत्रवन्न ग्राह्यः, मानाभावात् । व्यतीपात-पारणस्याहन्येव शास्त्रोक्तत्वात् केवल-तद्ग्रहणे सम्भवायोगाच्चेति भावः । आदिना नक्तैक-भक्ते । उत्तरः द्वितीय-दिने सोदय-त्रिमुहूर्त-व्याप्तः ॥ १०८ ॥

योग इति सर्वत्र विशेष्यम् । व्याप्तः अपराह्णादि-व्याप्तः । बवादि-करण-निर्णयमाह करणमिति । करणस्य तिथ्यर्द्ध-मितत्वाद्दिन-द्वय-व्याप्त्यसम्भवेना-संदेहाद् यद्दिने करणं तद्दिने उपोषणं कार्यम् । रात्रौ यदा तदेति यदा सायं-संध्यामारभ्य परेद्युरुदयात् प्रागेव करण-समाप्तिस्तदा पूर्वोत्तरयोर्दिनयोरेक-भक्ताभ्यामुपवास-सिद्धिरित्यर्थः । करणेषु शास्त्रोक्त-विशेषस्य कस्याप्यभावाद् भद्रायां क्लृप्त-न्यायस्यातिक्रमणे कारणाभावात् स एव निर्णयः सर्वत्रेति भावः । ननु पञ्चाङ्गानां मध्ये तिथ्यादि-चतुष्टय-निर्णयवद् वारनिर्णयः कुतो न, अत आह वारेष्विति ॥ १०९-११० ॥

अथ संक्रान्ति-सामान्य-निर्णयमाहासन्नेति । पूर्व-राशेरुत्तर-राशि-संक्रमणं संक्रान्तिस्तत्-कालस्य सूक्ष्मत्वेन तत्र विहित-स्नानाद्यसम्भवात्तत्-समीपवर्तिन्यः पूर्वा

---

1. 'पूर्व्वं"..............."उपाकर्मणि चोत्सर्गे ग्रह दोषो न विद्यते" not found in H.
2. E. and J. दिन-द्वयैकभक्तायाम् । 3. D. चरे तु ।

वर्तमाने तुला-मेषे नाड्यस्तूभयतो दश ।
वृषभादौ स्थिरे पुण्याः प्राक् पश्चादपि षोडश ॥११२॥
मिथुनादौ द्वि-स्वभाव उत्तराः षष्टि-नाडिकाः ।
अहःसंक्रमणे रात्रावनुष्ठान-निषेधतः ।
उक्तौ[1] कालौ व्यवस्थाप्यौ तद्बलात्[2] पूर्व-पश्चिमौ ॥११३॥
रात्रौ संक्रमणे भानोर्दिनार्ध[3] स्नान-दानयोः ।
अर्ध-रात्रादधस्तस्मिन् मध्याह्नस्योपरि क्रिया ॥११४॥

उत्तराश्च त्रिंशन्नाड्यः पुण्य-कालः सामान्यत इत्यर्थः । तत्र विशेषमाह चरेष्विति । चरेषु मेष-कर्क-तुला-मकराणां चतुर्णां चराणां मध्ये इत्यर्थः । विंशतिरित्यस्य पूर्वत्राप्यन्वयः । "विशेषः कर्कटे" इति पाठान्तरं तु वक्ष्यमाण-विरुद्धम् ॥१११॥

वर्तेति । समाहार-द्वन्द्वः । तुला-मेषयोर्वर्तमाने संक्रममाणे रवौ सति उभयतः पराः पूर्वाश्च दश नाड्यः पुण्या इत्यर्थः । वृषेति । आदिना सिंह-वृश्चिक-कुम्भाः । एतेषां चतुर्णां स्थिर-संज्ञा ॥११२॥

मिथुनेति । आदिना कन्या-धनु-मीनाः । एतेषां चतुर्णां[4] द्वि-स्वभाव-संज्ञा षडशीति-मुख-संज्ञा च । कर्क-मकरयोरुक्त-निर्णययोरपवादमाहाह्नरिति । अत्राहःपदमुदयास्त-प्रत्यासन्न-पर-पूर्व-काल-परम् । तत्र संक्रमणे उक्त-रीत्या-ऽनुष्ठानस्य रात्रौ प्राप्तावपि तत्र[5] तन्निषेधात्तद्बलात् तत्र तत्र[6] दिवा-स्नानादि-विधिबलाच्चोक्तौ पूर्व-पश्चिमौ कालौ व्यवस्थाप्यौ विरुद्धतया व्यत्ययेनाश्रयणीया-वित्यर्थः[7] । एतेनात्रान्यथा-व्याख्यानं केषाञ्चिदपास्तम् । एवं चेदं सर्वं दिवा-संक्रमण-विषयम् ॥११३॥

अत एव रात्रौ संक्रमणे विशेषमाह रात्राविति । पुण्यमिति शेषः, तत्रत्य-व्यवस्थामाहार्धरात्रादिति । रात्रि-मध्यमाष्टम-मुहूर्तादधः पूर्वं तस्मिन् संक्र-मणे सति पूर्व-दिने मध्याह्नादूर्ध्वं क्रिया स्नानाद्यनुष्ठितिः । अनाम्रेडितान्तत्वाद् द्वितीया न ॥११४॥

---

1. C. उभौ । 2. I. तद्वशात् । 3. C. दिनार्धं । 4. not found in B. 5. तत्र not found in B. 6. तत्र only once used in B. 7. v.r. B. व्यत्ययेनानुष्ठेयत्वे नाश्रयणीयावित्यर्थः ।

ऊर्ध्वं संक्रमणे[1] चोर्द्ध्वमुदयात् प्रहर-द्वयम् ।
पूर्णं चेदर्ध-रात्रे तु यदा संक्रमते रविः ॥११५॥
प्राहुर्दिन-द्वयं पुण्यं मुक्त्वा मकर-कर्कटौ ।
कर्कटे मकरे रात्रावप्याचारादनुष्ठितिः[2] ॥११६॥
पूर्णिमा-प्रतिपत्-सन्धौ राहुः सम्पूर्ण-मण्डलम् ।
ग्रसते चन्द्रमर्कं च पर्व-प्रतिपदन्तरे ॥११७॥
ग्रस्यमाने भवेत् स्नानं ग्रस्ते होमो विधीयते ।
मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते ॥११८॥

ऊर्द्ध्वं संक्रमणे तु द्वितीय-दिने उदयात् तमारभ्य प्रहर-द्वयं पुण्यमित्यर्थः । पूर्णं चेदिति । यदा तु उक्त-मुहूर्तात्मके पूर्णेऽर्ध-रात्रे[3] संक्रमते रविस्तदा दिन-द्वयं पूर्वोत्तरं पुण्यमाहु[4]रित्यर्थः ।

एवं सामान्यतो रात्रि-संक्रमणेषूक्त[5]-निर्णयस्यायनयोः पर्युदासमाह मुक्त्वेति । नन्वेवं तयोः कथमत आह कर्कट इति । अपिना दिवा । आचारं वीक्ष्य । यदाचारादिति पाठान्तरम् आचारमनतिक्रम्येति तदर्थः । यद्यपि सामान्यतस्तत्र विकल्पः प्राप्तोऽन्यतस्तथापि न स ऐच्छिकः किन्तु तत्तद्देश-प्रसिद्ध-शिष्टाचारतो व्यवस्थितः । स चेत्थम्—रात्रावयन-संक्रमे दिन-द्वयादि-पुण्यं न किन्तु रात्रावेव पूर्व-परीभावेन स्नानादि-क्रियेति प्राच्य-शिष्टाचारः । निशि कर्के पूर्वमेव दिनम् । मकरे तु परमेव दिनं ग्राह्यमिति दाक्षिणात्य-शिष्टाचारः । तथा च शिष्टाचारादुभयं प्रमाणमिति भावः ॥११५-११६॥

अथ ग्रहण-निर्णयमाह पूर्णिमेत्यादिना । तत्रादौ तत्-स्वरूपमाह पूर्णिमेति । राहुः पूर्णिमा-प्रतिपत्-सन्धौ संपूर्ण-मण्डलं चन्द्रं पर्वणो दर्शस्य प्रतिपदश्चान्तरे सम्भावकं च ग्रसते यत्तद् ग्रहणमित्यर्थः ॥११७॥

तत्र कदा किं कार्यमित्याकाङ्क्षायामाह ग्रस्येति, ग्रास-काले इत्यर्थः । ग्रस्ते ग्रासोत्तरम्, एवमग्रेऽपि ॥११८॥

---

1. C. ऊर्ध्वं-संक्रमणे । 2. V. r. रात्रौ यथाचारादनुष्ठितिः । 3. Add. r. वा A. ।
4. V.r. B. पुण्यं प्राहुः । 5. v.r. A. संक्रमणेषु ।

सूर्य-ग्रहे तु नाश्नीयात् पूर्वं याम-चतुष्टयम् ।
चन्द्र-ग्रहे तु यामांस्त्रीन् बाल-वृद्धातुरैर्विना ॥११९॥
अपराह्णे न मध्याह्ने मध्याह्ने न तु सङ्गवे ।
भुञ्जीत सङ्गवे चेत् स्यान्न पूर्वं भुजिमाचरेत् ॥१२०॥
ग्रस्तोदये विधोः पूर्वं नाहर्भोजनमाचरेत् ।
ग्रस्तावेवास्तमानं च[1] रवीन्दू प्राप्नुतो यदि ॥
तयोः परेद्युरुदये स्नात्वाऽभ्यवहरेन्नरः ॥१२१॥
त्रयोदश्यादितो वर्ज्यं दिनानां नवकं ध्रुवम् ।
मङ्गलेषु समस्तेषु ग्रहणे चन्द्र-सूर्ययोः ॥१२२॥
द्वादश्यादि[3]स्तृतीयान्तो वेध इन्दु-ग्रहे स्मृतः ।
एकादश्यादिकः सौरे चतुर्थ्यन्तः प्रकीर्तितः ॥
खण्ड-ग्रहे ततः[3] प्रोक्तमुभयत्र दिन-द्वयम्[4]॥१२३॥

अत्र भोजन-व्यवस्थामाह सूर्येति। पूर्वं यस्मिन् यामे ग्रहस्ततः पूर्वम्, अस्याग्रेऽपि संबन्धः। अनयोः पर्युदासमाह बालेति ॥११९॥

नन्वेवं तत्र कथमत आहापेति। पञ्चधा विभागेन[5] संगवादौ ग्रहणे तत्तदव्यवहित-पूर्वभाग एव तेषां भोजनं नेत्यर्थः ॥१२०॥

ग्रस्तोदये विधोर्विशेषमाह ग्रस्तोदये इति। ग्रस्तास्ते उभयत्र विशेषमाह ग्रस्तावेवेति। तयोरिति तदेत्यादिः। तदा परेद्युस्तयो रवीन्द्वोरुदयानन्तरम् इत्याद्यर्थः ॥१२१

ग्रहण-पूर्वापर-दिनेषु विवाहादि-सर्व-निषेधमाह त्रयोदेत्यादि। ध्रुवं नियमेन ॥१२२॥

वेधमाह—द्वादेति। सौरे ग्रहे। ततः ग्रहादुभयत्र। तयोरिति पाठे तयो रवीन्द्वोः खण्ड-ग्रहे इत्यर्थः ॥१२३॥

---

1. C. तु। 2. J. द्वादशादि। 3. v.r. तयोः। 4. I. दिन-त्रयम्।
5. v.r. A. भागेनासङ्गवौ।

नित्ये नैमित्तिके जप्ये होमे यज्ञ-क्रियासु च ।
उपाकर्मणि चोत्सर्गे ग्रह-दोषो न विद्यते ॥
तमेव निर्णयं शास्त्र-न्यायाभ्यां कर्त्तुमुद्यमः[1]॥१२४॥

अस्यापवादमाह नित्ये इति। जप्ये होमे इति पाठः। निर्णीत-मुपसंहरन्नग्रिमं प्रतिजानीते तमेव निर्णयमिति। "ईदृशं नियममि"ति पाठान्तरम्। तत्र नियमः [2]प्रकरणम्। उद्यम इति पाठः ॥ १२४ ॥

---

1. Add. r. C. and H. and I. ईदृशं नियमं न्यायैर्विवरितुमिहोद्यमः।"
2. v.r. A. प्रकारणम्।

ननु नायमुद्यमः सफलः, कालस्य गगन-कुसुमायमानत्वात्। तदेतत् परम-रहस्यम् अभिजानानः कपिल-महामुनिस्तत्त्वानि विवेक्तुकामः कालमुपेक्ष्याग्यानेव पञ्च-विंशति-तत्त्वानि विविवेच—

"मूल-प्रकृतिरविकृतिर्महदाद्याः प्रकृति-विकृतयः सप्त।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः[1] ॥"

इति। न चैतेष्वेव तत्त्वेषु कालस्यान्तर्भावो मुनिना विवक्षित इति शङ्कनीयम्, त्वदभिमतस्य[2] कालस्य यथोक्त-पञ्चविंशति-तत्त्वानां च परस्परमत्यन्त-विलक्षणत्वात्। तथाहि, चिर-क्षिप्रादि-व्यवहारस्यासाधारणो हेतुः काल इति त्वदभिमतं[3] काल-लक्षणम्। तत्त्वानां त्वन्यादृशानि लक्षणानि। सत्त्व-रजस्तमोगुणानां साम्यावस्था मूल-प्रकृतिः। महदहङ्कार-पञ्च-तन्मात्राख्यानां सप्तानां प्रकृति-विकृतीनां मध्येऽध्यवसाय[4]-हेतुर्महत्तत्त्वम्। अभिमान-हेतुरहङ्कारः। शब्द-स्पर्श-रूप-रस-गन्धात्मकानि पञ्च तन्मात्राणि। पृथिव्यादि-पञ्च-महाभूतानाम् एकादशेन्द्रियाणां च षोडश-

---

एवं कारिकाः समाप्य व्याख्यानमारभते—नन्वित्यादिना। कालस्य तस्यैव। अत्र मानमाह तदेतदिति, तस्य[5] तत्त्वमित्यर्थः। कपिलेति। अयञ्च साङ्ख्य-शास्त्र-प्रणेता देवहूति-पुत्रो विष्ण्ववतार एव,

"एतन्मे जन्म लोकेऽस्मिन् मुमुक्षूणां दुराशयात्।
प्रसंख्यानाय तत्त्वानां संमतायाऽऽत्म-दर्शने[6] ॥"

इति स्मृतेः। "अग्निः स कपिलो नाम साङ्ख्य-शास्त्र-प्रवर्तकः" इति स्मृतेरग्न्यवतार-रूप-कपिलान्तरमेवेत्यन्ये। अग्न्याख्य-शक्त्यावेशादग्निरिति तस्यैव रूपकमित्यपरे। [7]"विविवेचे"ति पाठः। तदेवेश्वर-कृष्णोक्त्या आह मूलेति, कर्मधारयः। [मह]दाद्याः तन्मात्रान्ताः[7]। प्रकृतीति कर्मधारयः[8]। षोडशकः एकादशेन्द्रिय-पञ्च-भूत-सङ्घः। परिमाणे कण्। [9]च एवार्थे व्युत्क्रमे च[9], विकृतिरेव। आदिना ज्येष्ठ-कनिष्ठादि। तान्येवाह सत्त्वेत्यादि। [10]साम्येति अकार्यावस्थं गुण-सामान्यमित्यर्थः[10]। अध्यवसायो निश्चय-वृत्तिरेवमग्रेऽपि[11]।

---

1. SamKar., v. 3, p. 17. 2. L. तदभिमतस्य। 3. L. तदभिमतं...।
4. L. मध्ये व्यवसाय। 5. v.r. B. तस्या। 6. Bhag P., 3.24.36, p. 160.
7-7. v.r. A. तन्मात्राः। 8. v.r. A. not found. 9-9. v.r. A. not found.
10-10. Not found in A. 11. v.r. A. अध्यवसायी निश्चयः।

विकाराणां लक्षणानि प्रसिद्धानि। अप्रकृतिरविकृतिः पुरुषश्चिदात्मकः। न ह्येवं लक्षणकेषु तत्त्वेषु कालस्यान्तर्भावः सम्भाव्यते। नापि षड्विंशं तत्त्वान्तरं[1] मुनिरनुमनुते। कथं तर्हि मुनि-प्रणीतानि तत्त्वानि आर्याभिः संक्षिप्तान् ईश्वरकृष्णो बहिःकरणान्तःकरणे विविचन्[2] कालं व्यवजहार—"साम्प्रत-कालं बाह्यं त्रिकाल-माभ्यन्तरं करणमि"ति[3]। पर-प्रसिद्ध्या परो बोधनीय इति न्यायेनायं व्यवहारो न तु स्व-सिद्धान्ताभिप्रायेणेति वदामः। अत एवैतद्वचनं व्याचक्षाणा वाचस्पति-मिश्रास्तत्त्व-कौमुद्यामेवमाहुः "कालस्तु वैशेषिकाभिमत एको नातीतानागतादि-व्यवहार-भेदं[4] प्रवर्तयितुमर्हति। तस्मादयं यैरुपाधि-भेदैरतीतानागतादि-भेद-भावं प्रतिपद्यते, सन्तु त एवोपाधयो व्यवहार-हेतवः, कृतमन्तर्गडुना कालेनेति सांख्या-चार्याः। तस्मान्न काल-रूप-तत्त्वान्तराभ्युपगम" इति।

अथोच्येत—भूत-कालो वर्त्तमान-कालो भविष्यत्-काल इत्येवं त्रिष्वपि भूतादिष्वनुगतः काल-प्रत्यय एकमनुगतं काल-तत्त्वमन्तरेणानुपपन्न इति, तन्न[5], पदार्थ-प्रत्ययवदुपपत्तेः। यथा भवन्मते द्रव्य-पदार्थो गुण-पदार्थ इति षट्सु भावेषु चतुर्ष्वभावेष्वप्यनुगतः[6] पदार्थ-प्रत्यय एकमनुगतं पदार्थ-शब्द-वाच्यं तत्त्वान्तर-मन्तरेणाप्युपपन्नः[7], तथा काल-प्रत्ययः कुतो नोपपद्येत[8]। तस्मान्निस्तत्त्वं कालं

---

प्रसिद्धानि तत्र तत्त्वान्तरे च। षड्विंशं तत्-सङ्ख्या-पूरकम्, [9]तेनानुक्तत्वात्। विविचन्निति पाठः[9]। साम्प्रतेति, वर्तमान-काल[10]-ग्राहकमित्यर्थः, एवमग्रेऽपि। इति इत्यनेन। [11]पूर्वाह्न इदं समाधत्ते परेति। अत एव तस्य स्वानिष्टत्वादेव[11]। उपाधीति सूर्यादि-क्रियेत्यर्थः। इतिस्तदुक्ति-समाप्तौ[12]। पूर्व-पक्षमुपसंहरति

---

1. D. E. H. षड्विंश तत्त्वान्तरं। 2. D. E. H. विविचन्।

3. SamKar., v. 33, p. 140.

4. C. एकोऽनागतातीतादि-भेदं; E. एकोऽतीतानागतादिभेदं; L. एको नानागतातीतादि-भेदं।

5. C. तव। 6. "अपि" not found in L.

7. E. I. no तत्त्वान्तरम्। 8. D. E. नोपपद्यते।

9-9. A. omitted. 10. A. विमानप (?)। 11-11. A. not found.

12. Add.r. B. तदेव विशदयति यथेति। यद्येतेति। अनुगत-प्रतीतेरनुगत-धर्मान्तर-साधकत्वस्य-वान्यत्र दृष्टत्वेन सामान्य-धर्म-साधकत्वं नात्रापि तत्र तद्धर्मान्वयाङ्गीकारेणेति भावः।

निर्णेतुं महानयमुद्यमः प्रेक्षावच्छिरोमणेर्माधवाचार्यस्य न कथञ्चिदप्युपपन्न इत्येवं प्राप्ते ब्रूमः ।

आयुष्मतश्चैतस्यैवं[1] निरूढ[2]-काल-तत्त्वे यः प्रद्वेषः स कस्य हेतोरिति वक्तव्यम् । किं कपिल-महामुनिना निराकृतत्वात्, किं वा सांख्य-शास्त्र-प्रणीतेषु तत्त्वेष्वसंगृहीतत्वात्, उत लक्षणाभावात्, आहोस्वित् प्रमाणाभावात्, अथवा[3] प्रयोजनाभावात्, अथवा तत्त्व-गत-पञ्च-विंशति-तत्त्व[4]-संख्याभ्यास-पाटवेनावसिता[5]-च्छ्रद्धा-जाड्यात् ? न प्रथमः, काल-निराकरण-सूत्रस्य मुनिना प्रणीतस्यानुपलम्भात् । न द्वितीयः, अतिप्रसङ्गात् । ऋग्वेदादि-प्रोक्तानां ज्योतिष्टोमादीनाम्, आयुर्वेद-धनुर्वेद-गान्धर्व-प्रोक्ताना[6]मौषध-शस्त्र-स्वरादीनां चासंगृहीतत्वेन तेष्वपि भवतः प्रद्वेषः केन वार्येत[7] । अथ तेषां विशिष्यासंग्रहेऽपि सुख-दुःख-मोहात्मकत्वेन गुण-त्रयान्तर्भावादस्त्येवार्थात् संग्रह इत्युच्येत,[8] तर्हि कालस्याप्यसौ न दण्ड-वारित इति बुद्धिं समाधत्स्व । कालस्य गुण-त्रय परिणामत्वे सावयवत्वमनित्यत्वं घटादेरिव प्रसज्येतेति चेत्, नित्य-निरवयव-काल-तत्त्वाभिनिवेशवतो

---

तस्मादिति । निस्तत्त्वं तत्त्व-बहिर्भूतम् । प्रेक्षा नव-नवोन्मेष-शालिनी बुद्धिः । उपपन्न इत्यादि-कर्मणि क्तः ।

आयुष्मतः पूर्व-पक्षिणस्तव[9] । उक्त-हेतोरेवाह निरूढेति[10] । तदेव विशिष्याह [11]किमित्यादिना[11] । अवसितात्[12] तेनातिसंबद्धात् । [13]"वासितादि"ति पाठेऽप्येवम्[13] । निराकरणेति करणे ल्युट् । तमेवाह ऋग्वेदेति । औषधेति यथासंख्यमन्वयः । [14]एवमग्रेऽपि । असौ तदात्मकत्वेन तदन्तर्भावेनार्थिकसंग्रहः, उभयत्रापि कारणात्मनेति भावः । अत एवा [ ह बुद्धिमिति ][14] ।

---

1. E. L. आयुष्मतश्चैतस्यैवं । 2. L. निगूढ़ । 3. L. अथ ।
4. D. L. no तत्त्व । 5. I……नाभ्यवसितात् ; L. पाटव-वासितात् ।
6. C. D. गान्धर्व-वेद-प्रोक्तानाम् । 7. E. J. वार्यते ।
8. E. J. इत्युच्यते । 9. v.r. A. no तव । 10. v.r. B. निगूढतीत्यादि ।
11-11. v.r. B. किमि कस्येति, निमित्त-कारणेति षष्ठी । 12. v.r. A. निवासितात् ।
13-13. v.r. A. not found. 14-14. v.r. A. not found.

वैशेषिकादेः पतत्वयं वज्र-प्रहारः शिरसि, वेदवादिनां तु न काऽपि क्षतिः, कालस्योत्पत्ति-सावयवत्वयोः प्रत्यक्ष-श्रुतावुपलभ्यमानत्वात्। तैत्तिरीय-शाखायां नारायणीये कालोत्पत्तिराम्नायते—

"सर्वे निमिषा जज्ञिरे विद्युतः पुरुषादधि।
कला मुहूर्ताः काष्ठाश्चाहोरात्राश्च सर्वदा॥
अर्ध-मासा मासा ऋतवः संवत्सराश्च[1] कल्पन्ताम्[2]।"

इति। तस्यामेव शाखायाम् आरुणकेतुक[3]-चयन-ब्राह्मणे सावयवत्वं श्रूयते। "उक्तो वेषो वासांसि च कालावयवानामितः प्रतीच्येष्वि"ति। इतोऽस्मादनुवाकात् प्रतीच्येष्वधस्तनेषु अनुवाकेषु कालावयवानाम् ऋतूनां ध्यातव्यो वेष उक्तः,

---

बुद्धेः समाधानं निश्चिन्तत्वम्। तत्र शङ्कते कालस्येति। तदेव क्रमेणाह तैत्तिरीयेति। नारायणीये उपनिषदि।

कालस्य[4] ब्रह्मण उत्पत्तिमाह सर्वे इति। पक्ष्म-पात-परिमिताः सूक्ष्माः [5]काल-विशेषा निमिषास्ते सर्वेऽपि विद्युतः स्वयं प्रकाशमानात् पुरुषात् परिपूर्णात् परमेश्वरात् अधिजज्ञिरे आधिक्येनोत्पन्नाः। तेभ्योऽपि अधिकः काष्ठा इत्यादि-क्रमोऽस्मरोक्तः। चावनुक्त-समुच्चयार्थौ। तदेव सर्वदेत्यनेनोक्तम्। तेन लवादि-संग्रहः। एते सर्वे कल्पन्ताम् स्वस्व-प्रयोजन-समर्था भवन्ति। (प्रत्यक्ष नन्वेव?)

कौर्मेऽप्युक्तम्—"अव्यक्तादभवत् कालः प्रधान-पुरुषः परः। तेभ्यः सर्वमिदं जातं तस्माद् ब्रह्ममयं जगत्॥ प्रधानं पुरुषश्चैव तत्त्व-द्वयमुदाहृतम्। तयोरनादि रुद्दिष्टः कालः संयोजकः परः॥ त्रयमेतदनाद्यन्तमव्यक्ते समुपस्थितम्। तेना-विवेकजस्तस्मात् संसारः पुरुषस्य तु॥ स चाविवेकः प्रकृतौ सङ्गात् कालेन सोऽभवत्। कालः सृजति भूतानि कालः संहरति प्रजाः। सर्वे कालस्य वशगा न कालः कस्यचिद् वशी॥ सोऽन्तरा सर्वमेवेदं नियच्छति सनातनः। प्रोच्यते भगवान् प्राणः सर्वज्ञः पुरुषोत्तमः[6]॥"

---

1. L. संवत्सरश्च कल्पताम; see also MahanarU.
2. MahanarU., I. 8—9, p. I, BSS., no. 35; v.r. सर्वशः।
3. D. H. अरुणकेतु। E. H. I. J. K. अरुण। 4. v.r. A. B. कास्य।
5-5. This whole portion is missing in A; only इरेव···का गतिः is found।
6. Kurma P., uttara, 3, I. 8. 9. 15-17; v.r. "संयोगजः परः"। "तेनाविवेकतस्तस्मात्"। "संहरते प्रजाः"।

वस्त्राणि चोक्तानीत्यर्थः। नित्यत्व-निरवयवत्वाभिधायिनो वैशेषिकादि-शास्त्रस्य "अमृता देवता" इतिवदापेक्षिक-नित्यतायाम् अन्तर्धान-शक्त्युपेत-यक्ष-राक्षसादिवत् संस्पर्श-योग्यावयव[1]-शून्यतायाञ्च तात्पर्यं वर्णनीयम्। एवञ्च सति, विरोधाधिकरण-न्यायोऽत्रानुगृहीतो भवति। तस्य च न्यायस्यानुग्राहका[2]-वेतौ श्लोकौ—

"औदुम्बरी वेष्टितव्या[3] सर्वेत्येषा स्मृतिर्मितिः।
अमितिर्वेति सन्देहे मितिः स्यादष्टकादिवत्॥
औदुम्बरीं स्पृशन् गायेदिति प्रत्यक्ष-वेदतः।
विरोधान्मूल-वेदस्याननुमानादमानता[4]॥"

---

नाशोऽपि तत्रैवोक्तः—"कालञ्जरं महातीर्थं लोके ख्यातं महेश्वरः। कालं जरितवान् देवो यत्र भक्त-प्रियो हरः[5]॥" तत्र श्वेताख्यस्य राजर्षेः स्वस्यापि तल्लिङ्ग-भजकस्य भक्ति-योगवतः शत-रुद्रीय-जापकस्य हननाय समागतस्य शूल-हस्तस्य कालस्य 'मदधीनं सर्वं जगदि'ति गर्वेण रुद्रमवमन्यमानस्य स्वभाववादिनः पाशैर्वेगाद् राज-बन्धकस्य वधाय देव्या सहाऽऽविर्भूतेन शिवेन सावज्ञं वाम-पादेन स कालो हतः। ततो ब्रह्मणा प्रार्थितेन शिवेन स पुनर्जीवितः। "नास्ति कश्चिदपीशान दोष-लेशो वृषध्वज। कृतान्तस्यैष भवता तत्कार्ये विनि-योजितः[6]॥" इति।

श्रुति-विरोधेन वैशेषिकादेः का गतिर्भवेत् [ तस्मात् ] रुर्वथाजान-कत्वमयुक्तम्[5]। अतः सम्भवतीति न्यायेनाह नित्यत्वेति, एवं सतीत्यादिः, श्रुति-विरोधे सतीति तदर्थः। ननु किमर्थमेवम्[7]। अत आह एवञ्च सतीति, तस्य तथा तात्पर्ये वर्णिते सति चेत्यर्थः। न्यायः सिद्धान्तेऽपि। [8]अत्र धर्म-शास्त्रे। अनुग्रहः[8] संग्रहः। मितिः प्रमाणम्। पूर्व-पक्षमाह मितिरिति। सिद्धान्तमाह औदुम्बरीमिति। वेदतः सार्व-विभक्तिकस्तृतीयान्तात्तसिः।

---

1. C. यच्च राक्षसादिवत्तस्य दर्शन-योग्यावयव···; L. यक्ष-राक्षसादि-स्पर्शवत् स्पर्श-योग्यावयव...।
2. v.r. संग्राहकौ। 3. L. वेष्टनीया। 4. JaimNM., 1.3.3, 4-5, p. 28.
5. KurP., chap. 35, v.r. 11. 6. op. cit., v. 36.
7. Add.r. B. स्वतन्त्र प्रमाणमेवास्ताम्। 8-8. v.r. not found in A.

इति। अयमर्थः, अध्वरे महा-वेद्यां सदोनामकस्य मण्डपस्य मध्ये काचिदुदुम्बर-शाखा स्तम्भत्वेन निखाता भवति। तामुद्दिश्य वस्त्र-वेष्टनं स्मर्यते, "औदुम्बरी सर्वा वेष्टयितव्ये"ति। तत्र संशयः, एषा स्मृतिः प्रमाणं, न वेति। तत्र पूर्वाधिकरणे "अष्टकाः कर्तव्या" इत्यस्याः स्मृतेर्मूल-वेदानुमापकत्वेन प्रामाण्यमुक्तम्। तेनैव न्यायेन सर्व-वेष्टन-स्मृतिः प्रमाणमिति पूर्वः पक्षः[1]। "औदुम्बरीं स्पृष्ट्वोद्गायेदि"ति प्रत्यक्ष-श्रुतौ स्पर्शो विधीयते। न चासौ सर्व-वेष्टने सत्युपपद्यते। तथा च सर्व-वेष्टन-स्मृति-मूल-भूत-वेदानुमानस्य प्रत्यक्ष-श्रुति-विरुद्धस्य[2] कालात्ययापदिष्टत्वेन निर्मूला वेष्टन-स्मृतिरप्रमाणमिति सिद्धान्त इति।

अथ मन्यसे महातातं[3] शिवमाराध्य तत्प्रसाद-लब्ध-सर्वज्ञत्व-पदः कणाद-महामुनिर्वेद-तात्पर्यं सम्यग्वेत्तीति वेदस्यैव मन्द-मति-प्रतीतादर्थादर्थान्तरं नेतव्यमिति। एवमपि यस्य प्रसादादयं सर्वज्ञतामलभत स एव शिवो मुख्यः सर्वज्ञ इति तन्मतानुसारेण कणाद-मतस्यैवान्यथा नयनमत्यन्तमुचितम्। शिवो हि सर्वेष्वागमेषु षट्त्रिंशत्तत्त्वानि निरूपयन् काल-तत्त्वस्योत्पत्तिमङ्गीचकार। निखिल-शैवागम-सारमार्याभिः[4] संगृह्णानो भोजराजः शुद्धानि पञ्च तत्त्वानि शिव-शक्ति-सदाशिवेश्वर-विद्याख्यानि निर्दिश्येतराणि[5] निर्दिशन्माया-कार्यत्वोक्ति[6]-पूर्वकमेव कालं निरदिक्षत्—

---

तत्र सन्देहे सति। न च नहि। मानस्य स्मृतित्व-रूप-हेतोरत्र श्रुति-विरोधः। साध्य-द्वारा यस्य बलवत्-प्रमाणेन पक्षे साध्याभावः परिच्छिन्नः स कालात्ययापदिष्टः। अयमेव बाधित-विषय[7] इत्युच्यते।

महातातः जगत्-कर्तृत्वेन तत्पिता। "महता तपसे"ति पाठान्तरम्। मन्देति बहुव्रीहिः। ततः शेष-षष्ठ्या समासः। [8]नेतव्यं निश्चेतव्यम्। अयं कणादः। तन्मतमेवाह शिवो हीति। हि यतः। तदेव विशदयति निखिलेति।

---

1. C. पूर्व-पक्षः। 2. C. प्रत्यक्ष-श्रुति-विहन्तृत्वेन, and I. हन्तृत्वेन ; L. प्रत्यक्ष-श्रुति-विरुद्ध...।
3. v.r. महता तपसा। 4. L. शैवागम-सारे आर्याभिः। 5. निर्दिश्येतराणि not found in C.
6. D. E. H. I. J. K. कार्योक्ति···। 7. The "कालात्ययापदिष्टः" is the fifth हेत्वाभासः ; Bhasa-pariccheda, 71 ; for the explanation of कालात्ययापदिष्टः, see v. 78 a, साध्य-शून्यो यत्र पक्षस्त्वसौ बाध उदाहृतः। बाध is identical with कालात्य॰।
8. Add.r. B. अर्थान्तरं चेतनवद्रदेशाधिकं (?) तत्।

"पुंसो जगत: कृतये मायातस्तत्त्व-पञ्चकं भवति।
कालो नियतिश्च तथा कला च विद्या च रागश्च[1] ॥"

इति। तानि माया-तत्त्व[2]-सहितान्येकादश तत्त्वानि सांख्य-प्रसिद्ध[3]-पञ्च-विंशति-तत्त्वानि चोद्दिश्य क्रमेण विवृण्वन्निदमाह—

"नानाविध-शक्तिमयी सा जनयति काल-तत्त्वमेवाऽऽदौ।
भावि-भवद्भूतमयं कलयति जगदेष कालोऽत: ॥"*

इति। तत्र टीकाकार इत्थं व्याचख्यौ—"नन्वेष कालो नैयायिकादिभिर्नित्योऽभ्युपगतोऽत आह 'भावि-भवद्भूतमयमि'ति। भूतादि-रूपेण त्रि-विधत्वादचेतनत्वेन[4] अस्यानित्यत्वं सिद्धमिति भाव:। केन कार्येणास्य सिद्धिरत आह 'कलयति जगदेष कालोऽत' इति। चिर-क्षिप्रादि-प्रत्यय-द्वारेण[5] कलयत्याक्षिपतीत्यर्थ:" इति।

इत्थं प्रत्यक्ष-श्रुति-सहकृतैरागमै: कणाद-शास्त्रस्य बाधे सत्यप्युत्तर[6]-मीमांसा-गत-द्वितीयाध्याय-प्रथमाधिकरण-न्यायोऽनुगृह्यते। तस्य च न्यायस्य संग्राहकौ[7] श्लोकौ—

"सांख्य-स्मृत्याऽस्ति सङ्कोचो न वा वेद-समन्वये।
धर्मे वेद: सावकाश: सङ्कोच्योऽनवकाशया ॥

शुद्धानि अमिश्राणि। पुंस इति, ततो जगदुत्पत्त्यर्थमित्यर्थ:। पञ्चकं शिवादि-रूपम्। तथेत्यादौ योज्यम्[8]। नियतिरदृष्टम्, कला कौशलम्, राग इच्छा। साङ्केति तच्छाख्योक्तेत्यर्थ:[9]। आह स एव। सा माया। चेतनस्यै कत्वादाहाचेतनेति। अनित्यत्वं[10] तदेव। अस्य कालस्य।

[11]अस्य तात्पर्यमाहेत्यमिति। समन्वयो मेलनम्[11]। पूर्व-पक्षमाह धर्मे[12]

---

1. च not found in C before रागश्च, Tattva-prakasa, chap. II, v. 2, p. 74; v.r. पुंसो ज्ञ-कर्त्रर्थं। 2. E. no तत्त्व। 3. L. सांख्य-सिद्ध।

* Tattva-prakasa, chap. III, v. 4, p. 117, v.r. सा सृजति हि।

4. D. E. H. I. J. K. चेतनत्वे सत्यनेकत्वेन
5. D. L. प्रत्ययोपाधि-द्वारेण; J. प्रत्यय-द्वारोपाधि-द्वारेण। 6. D. सत्युत्तर।
7. D. L. न्याय-संग्राहकौ। 8. v.r. A. तथेत्यादि योज्यम्।
9. v.r. not found in A. 10. v.r. A आनित्यकम्।
11-11. v.r. B आक्षिपति प्रवर्तयति, एवं सति तन्त्रान्तरैक-वाक्यतापीत्याहेत्यमिति। समन्वयेमूंह:।
12. v.r. B. सधर्मे इति।

प्रत्यक्ष-श्रुति-मूलाभिर्मन्वादि-स्मृतिभिः स्मृतिः ।
अमूला कापिली बाध्या न सङ्कोचोऽनया ततः[1] ॥"

इति । अयमर्थः । ऋग्वेदादिभिरग्निहोत्रादि-धर्मो ब्रह्मणो जगत्कर्तृत्वं च प्रतीयते । सांख्य-स्मृत्यादिस्तु प्रधानस्य जगत्-कारणत्वं प्रतिपादयति । तत्र तया[2] स्मृत्या वेदस्य सङ्कोचोऽस्ति? न वेति संशये[3] स्मृतेर्जगत्-कारणमन्तरेण[4] निरवकाशत्वात् प्राबल्यम्, वेदस्य तु धर्मेऽपि चरितार्थत्वाद्दौर्बल्यम्, ततः स्मृत्यनुसारेण वेदः संकुचित इति पूर्वः पक्षः । प्रत्यक्ष-श्रुतिभिर्बह्वीभिरनुगृहीता बह्वयो मन्वादि-स्मृतयो ब्रह्मणः कारणतामाचक्षते[5] । सांख्य-स्मृतिस्त्वेका मूल-हीना चेति दुर्बलत्वात् सैव बाध्या । अतो नास्ति वेदस्य सङ्कोच इति राद्धान्त[6] इति । अथ तार्किकत्वाभिमान-ग्रह-गृहीतः सन् पर-वश एवं ब्रूषे, भूतादीनामौपाधिकानां काल-विशेषाणामेवोत्पत्तिर्न तु निरुपाधिकस्य मुख्य-कालस्येति । तर्हि कपर्दकान्वेषणाय प्रवृत्तश्चिन्तामणिमलभतेत्यस्य वासिष्ठ-रामायण-प्रोक्तस्याऽऽभाणकस्य

---

इति । सिद्धान्तमाह प्रत्यक्षेति । ततः तस्य वेदस्य । [ धर्मो जगत्-कर्तृ- ]त्वं च उभयम् । तत्र तथा सति । स्मृतेरित्यादेरग्रेऽन्वयः । कारणं प्रधानम् । बहुवचनादि-स्वारस्यमाह बह्वीति । मान ग्रहेति रूपकम् । ग्रहो भूतादिः । अत एवाह परेति । वाशिष्ठेति । तत्र हि षष्ठे निर्वाण-प्रकरणे सप्त-त्रिंशत्तमे सर्गे शिखिध्वज-नृपोपाख्याने रामं प्रति वशिष्ठ-वाक्यम्—

"अत्यन्त-कृपणः कश्चित् किरातो धन-धान्यवान् । आस्ते विन्ध्याटवी-कच्छे कुटुम्बी ब्राह्मणादिवत् ॥ तस्य काचिन्निपतिता गच्छतो विन्ध्य-जाङ्गले । एका वराटिका राम तृण-जाल-समावृते ॥ कार्पण्यात् सुप्रयत्नेन सर्वं तृण-तुषादिकम् । कपर्दार्थं स्वमभितो दुधाव स दिन-त्रयम् ॥ ततो दिन-त्रयस्यान्ते तेन तस्मात् कुजाङ्गलात् । पूर्णेन्दु-बिम्ब-प्रतिमो लब्धश्चिन्तामणिर्महान् ॥ यथा तत्र किरातेन कपर्दान्वेषणेन तत् । रत्नं लब्धं जगन्मौल्यं निरन्तरमखेदिना । तथा श्रुतोपदेशेन स्वात्म-ज्ञानमवाप्यते ॥"

---

1. Brahma S., II. 1. 1.
2. Add.r. in C. E. च ।
3. D. E. संशयः ।
4. D. E. H. जगत्-कारणत्वमन्तरेण ।
5. C. ब्रह्म-कारणतामाचक्षते ।
6. L. सिद्धान्त इति ।

त्वमेव विषयोऽभूः। यतः साधर्म्य-वैधर्म्य-ज्ञानाय द्रव्याण्यन्विष्यन्[1] पर-ब्रह्म-तत्त्वमवागमः। व्यवहार-हेतूनां भूतादि-काल-विशेषाणामाधारः स्वयं व्यवहारातीतो नित्यो निरवयवो मुख्यः कालो यः स परमात्मैव। तथा च श्वेताश्वतरा आमनन्ति—"ज्ञः[2] काल-कालो गुणी सर्वविद्य"[3] इति। आस्तां नित्यत्वानित्यत्व-सावयवत्व-निरवयवत्व-चिन्ता, सर्वथाऽप्यस्ति सांख्य-तत्त्वेष्वार्थिकः काल-संग्रहः। साक्षात्संग्रहाभावस्तु ज्योतिष्टोमादिवत् प्रकृति-पुरुष-विवेकानुपयोगादित्यवगन्तव्यम्। तृतीय-चतुर्थ-पक्षौ तु भवतो वैशेषिक-परिचय-गन्धोऽपि नास्तीति प्रकटयतः। वैशेषिक-ग्रन्थेषु सर्वेष्वपि काल-प्रकरणे तल्लक्षणस्य तत्साधकानुमानस्य च प्रपञ्चितत्वात्। प्रमाणान्तराणि तु काल-साधकानि श्रुत्यैवोप-

---

इति। अत्र हेतुमाह यत इति। द्रव्याणि तदादीनि। ननु तावतापि कथं तदवगमोऽत आह व्यवेति। यत इत्यादिः। द्वैतापत्ति-भियाह परेति। ज्ञो[4] ज्ञान-रूपः। काल-काल इत्युक्त्या[5] स एव श्रुति-विषयः। अत एव [6]"येनावृतं नित्यमिदं हि सर्वम्" इत्यस्यादिः। द्वितीय-हेतु-[6]दूषणमुपसंहरति आस्तामिति। सर्वथापि तत्-सत्त्वेऽसत्त्वे चापि[7]। [8]साङ्ख्येति तदुक्तेत्यर्थः[8]। स च प्रकृतेः परिणामोऽतिभङ्गुरोऽविभुः क्षणाख्यः। यद्वा, शब्द-तन्मात्र-परिणाम एव दिग्वत् स कालः। अत एव साङ्ख्य-शास्त्रे आकाशत्वेनैव तत्त्वेषु तयोर्गणनं कृतम्। सूर्य-क्रियैव तु न काल इति स्पष्टं सर्वं मञ्जूषायाम्, तत एव बोध्यम्। नन्वेवं तत्र साक्षादेव निर्देशः कुतो न? अत आह साक्षादिति। [वैशे]षिकं काणाद-शास्त्रम्[9]। गन्धो लेशः। तल्लक्षणस्येति[10] अतीतादिव्यवहार-हेतुत्वस्येत्यर्थः। अनुमानस्य चेति, परत्व-जनके बहुतर-रवि-क्रिया-विशिष्ट-शरीर-ज्ञानमिदं परं [11]पर-सम्बन्ध-घटक-सापेक्षं साक्षात् सम्बन्धाभावे सति विशिष्ट-ज्ञानत्वात्, 'लोहितः स्फटिकः' इति ज्ञानवत्। स च तस्याः स्व-समवायि-संयुक्त-समवाय इत्यस्येत्यर्थः[11]। [परेतराणि (?) प्रमाणान्तराणि]

---

1. E. द्रव्याण्यन्विच्छन्। 2. I. no ज्ञः; L. यः। 3. Svet U., 6. 2., p. 104. 4. v.r. A. no ज्ञः। 5. v.r. B. इत्युक्त्या। 6-6. v.r. C. गुणित्वादि उभयोरावश्यकत्वाद् द्वितीय-पदे तुः। 7. v.r. B. तस्य कर्माङ्ग-काल-निर्णयानुपयोगित्वात् तदप्रतिबन्धकत्वाच्च। ए[तदे] वाह सर्वथापीति, तत्-सत्त्वेऽसत्त्वे चापीत्यर्थः। 8-8. v.r. not found in B. 9. v.r. A. षिकं शास्त्रम्। 10. v.r. B. तल्लक्षेति। 11. v.r. not found in A.।

न्यस्तानि। तथा च तैत्तिरीया आरुणकेतुके[1] मन्त्रमामनन्ति—

"स्मृतिः प्रत्यक्षमैतिह्यमनुमानश्चतुष्टयम्[2]।
एतैरादित्य-मण्डलं सर्वैरेव विधास्यते[3] ॥"

इति। तत्र[4] 'स्मृति'रनुमेय-श्रुति-मूलं मन्वादि-शास्त्रम्। 'प्रत्यक्ष' श्रोत्र-ग्राह्यो-ऽकृत्रिमो वेदाख्योऽक्षर-राशिर्योगि-प्रत्यक्षमौपनिषदाभिमतं साक्षि-प्रत्यक्षं वा।

---

अनुमान-भिन्नानि। आमनन्ति पठन्ति। तत्र चतुर्णां मध्ये। [5]अकृत्रिम इति, इदं मया कर्तव्यमिति बुद्धि-पूर्वक-यत्नेनाकरणादित्यर्थः। अत एव व्यास-सूत्रादि-विरोधो न, स्पष्टं मञ्जूषायाम्। प्रत्यक्ष-पदस्य तत्र क्वाप्यप्रसिद्धेराह योगीति। विनिगमना-विरहादाहौपेति। इदं मूल-कालाभिप्रायम्[6]। तज्जन्यस्तु षडिन्द्रिय-बोधः[7]; सर्वेषामिदानीं पश्यामि स्पृशामि[8] जिघ्रामीत्यादि-व्यवहारात्।

[9]अत्र प्रसङ्गाद् वृत्ति-विषये किञ्चिदुच्यते। ज्ञाने विषयस्य तत्त्वेन कारणतया पूर्वत्वेन पूर्वं प्राचीनैरर्थापरोक्षत्व-लक्षणं कृत्वा ज्ञानापरोक्षत्व-लक्षणं कृतम् "अभिव्यक्त-चैतन्याभिन्नत्वम् अर्थापारोक्ष्यम्; एतदपरोक्षत्ववत् अर्थ-व्यवहारानुकूलं ज्ञानापरोक्ष्यमि"ति[10]। तत्राद्ये अभिव्यक्त-मात्र-चैतन्याभिन्नत्वमत्र प्रतिपित्सितमिति तथोक्तम्। तथा च, चाक्षुषादि-वृत्त्यभिव्यक्तं यच्चैतन्यम् तदभाववत्त्वं लक्ष्यानुगतम् अनतिप्रसक्तं चेति नित्याभिव्यक्त-साक्षि-चैतन्यमादायापि न दोष इति तद्भावः। तत्तावद् दूषयति परिमले "अभिव्यक्त-चैतन्याभिन्नत्वम् अर्थापरोक्ष्यमिति तावन्न युक्तमि"ति[11]। तदीय-क्रमानुरोधेनैतद्दूषणेनैव द्वितीयं सुतरां दुष्टमेवेति तावदित्यनेन सूचितम्। नन्वत्र किं स्वरूप-सदभेद उत स्फुरतः? आद्येऽपि किं स्वेनैव विवक्षा उत निरस्त-भेदोपाधिकाभेदत्वेन? तत्र न तावदाद्य इत्याह "स्वरूप-सदभेद-मात्र-विवक्षायां चाक्षुष-वृत्त्यभिव्यक्त-पर्वतावच्छिन्न-चैतन्येन व्यवहित-वह्न्यवच्छिन्न-चैतन्यस्य, तेन व्यवहित-वह्नेश्च स्वाभाविकस्य आध्यासिकस्य चाभेदस्य सत्त्वेन व्यवहित-वह्नेरप्यपरोक्षत्वापत्तेरि"[12]ति। अत्र मात्र-पदेनोभय-व्यवच्छेदः। अयं भावः, चैतन्ययोः स्वाभाविकाभेदेन वृत्त्यभिव्यक्त-चैतन्ये साक्षा-

---

1. C. D. L. अरुणकेतुके। 2. C. अनुमानं चतुष्टयम्। 3. Tait Aran, I. 2. 2. 4. "तत्र" not found in L. 5. Add. r. B. सर्व-पुरुषाणामित्यादि। 6. v.r. B. कालाभिप्रायम्। 7. v.r. A. षडिन्द्रिय-वेद्यः। 8. not found in B. 9-9. (p. 56.) not found in B. 10. Kalpa-taru-parimala on Brahma S., Sariraka MB., 1.1.1., p. 55, 21-22. 11. op. cit, ll. 42-43. 12. op. cit, pp. 55, 56.

दाष्र्यासिक-वक्त्रभेदोऽस्त्येव। किञ्च, तदभिन्नाभिन्नस्य तदभिन्नत्वमिति न्यायेन मूल-कारणोपादानक-कार्योपादानके श्रुति-सिद्ध-मूल-कारणोपादानकत्व-व्यवहार-सिद्धेः न सः। अनाध्यासिकः स विवक्षित इति तु न, सदसतोर्वास्तवाभेदायोगेन असम्भवापत्तेः। अभिव्यक्त-पदस्य वृत्ति-प्रयुक्ताभेदान्तराघटितान्यतरार्थत्वमपि न, शब्द-मर्यादया तदलाभात्। प्रयुक्तत्वस्य साक्षात्-परम्परा-साधारण्येन तत्रापि चाक्षुष-वृत्त्यभिव्यक्त-धूमावच्छिन्न-चैतन्यमादाय दोषस्य तदवस्थत्वात्, न साक्षात्त्वस्यापि शब्दतोऽलाभाच्चेति नायः, द्वितीय इत्याह "निरस्त-भेदोपाधिकाभेद-विवक्षायां चरम-साक्षात्कार-निवर्त्य-विद्योपाधेश्चरम-साक्षात्कारोत्पत्ति-दशायां सत्त्वेन ब्रह्मणस्तदानीमापरोक्ष्याभावापत्तेरि"ति[1]।

अयं भावः, एवं विवक्षायां पूर्व-दोषो न, तदभेदस्य अनिरस्त-भेदोपाधिकत्वाभावात्, तदा तदाकार-वृत्त्यभावेन तदावरकाज्ञान-सत्त्वात्। प्रत्यक्ष-विषय-घटादि-स्थले तु तदावरकाज्ञान-निवृत्त्याभेदानुयोगि-भेदकोपाधेरसत्त्वेन अनिरस्त-भेदोपाधिकाभेदस्य सत्त्वमिति लक्षण-समन्वयः। ब्रह्मणि तु चरम-साक्षात्कारोत्पत्ति-दशायां तदाकार-वृत्त्या तदावरकाज्ञान-निवृत्तावपि अज्ञानान्तरमस्त्येव। श्रवण-मननाभ्यां प्रपञ्चे वास्तवत्व-बुद्ध्यपन [यनेन] व्यावहारिकत्व-बुद्धि-दृढीकरणम्, निदिध्यासने तु तामपि बुद्धिमपनीय प्रातिभासिकत्व-दार्ढ्य-करणं ततोऽत्यन्त-दर्शनेन वृत्ति-साक्षात्कारात्मकेन तत्त्वस्याप्यपनय इति सिद्धान्तात्। अत एव "सर्वोपाधि-विहीनं हि स्वयं ज्योतिरि"ति गीयते, नोपहितमपि। यदाह भगवान् भाष्यकारः 'नायमेकान्तेनाविषय' इति। नचान्तः-करण-वृत्तावप्यस्य साक्षात्कारे सर्वोपाधि-विनिर्मुक्तिस्तस्यैव तदुपाधेर्विनश्यदवस्थस्य पर-विरोधिनो विद्यमानत्वात्, अन्तःकरणस्यैव जीवोपाधेरित्यर्थः। अन्यथा तु चैतन्यच्छायापत्तिं विनाऽन्तःकरण-वृत्तेः स्वयमचेतनायाः प्रकाशत्वानुपपत्तौ साक्षात्कारत्वायोगादि"ति मिश्रैरुक्तम्[2]। नह्णीयमुत्पन्ना सती पश्चादविद्यां निवर्तयति येन नान्त्या स्यात्; किन्त्व[विद्या]विरोधिभावतया निवृत्ता तेनैवोदीयते। अन्यच्च, "न खलु तज्ज्ञानं विना स-वासन-विविध-दुःख-हेतुरविद्योच्छिद्यते। न च तदुच्छेदमन्तरेण विगलित-दुःखानुषङ्गानन्द-घन-ब्रह्मात्मता-साक्षात्काराविर्भावो जीवस्ये"ति[3] च। अत्र 'नह्णी'त्यनेनाविद्याया अन्त्यात्वं निरस्तम्।

1. op. cit, p. 56, ll, 9-10. 2. Bhamati on Sariraka M. B., 1.1.1., p.p. 57., ll. 5-9 ; v. r. स्व-परोपाधि विरोधिनो for पर विरोधिनो। 3. Bhamati, p. 78, ll. 11-13.

अन्यच्च, 'न खलु तज् ज्ञानमि'त्यनेन प्रागुक्तार्थः स्पष्टमेवोक्तः। अत एवाद्ये न "ननु निरुपाधि ब्रह्म साक्षात्कार-गोचरः कथम् उपहिततेति। तत्राह नचेति। निरुपाधि ब्रह्म विषयीकुर्वाणा वृत्तिः स्व-स्वोपाधि-निवृत्ति-हेतुरुदयते, स्वस्या अपि उपाधित्वाविशेषात्। ततः स्व-सत्तायां विनाश-हेतु-सान्निध्याद्विनश्यदवस्थत्वम्। एवञ्च नानुपहित-विषयता नवोपाधेर्विनाशकान्तरापेक्षेति भावः। ननु वृत्ति-विशिष्टस्य शबलतया न साक्षात्कार-विषयता, वृत्त्यवच्छिन्नात्म-विषयत्वे च वृत्तेः स्वविषयत्वापातः विशेषणाग्रहणेन विशिष्टाग्रहणात्; उपलक्षितस्य तु न वृत्त्युपाधि-कतेति। उच्यते, वृत्त्युपरागोऽत्र सत्तयोपयुज्यते, न भास्यतया; अतो वृत्ति-संसर्गे सति आत्मा विषयो भवति, न तु स्वत इति न दोषः।

ननूपाधि-सम्बन्धाद् विषयत्वम्, विषयत्वञ्चोपाधि-सम्बन्धो विषयत्व-लक्षण इति इतरेतराश्रयत्वम्। अत आह अन्यथेति। न साक्षात्कारस्य ब्रह्म-विषयत्व-प्रयुक्तं चैतन्य-प्रतिबिम्बितत्वं न स्वतः, घटादि-वृत्तिष्वपि साम्यात्। चैतन्यञ्च ब्रह्मेति तत्-सम्बन्ध इत्यर्थ" इति कल्पतरु-व्याख्यानम्।[1] "ननु निरुपाधि ब्रह्मेति। उपहितं वृत्ति-विषय इति न युक्तम्, ब्रह्म शुद्धं निरुपाधिकमिति वृत्ति-रूप-साक्षात्-कारस्य आकार इष्यते, नचोपाधौ विद्यमाने तदाकारः सम्भवति"[2] इति भावः। निरुपाधि ब्रह्म विषयमिति "मिथ्या-भूतेषूपाधिषु विद्यमानेष्वपि न वास्तव-निरुपाधिकत्वाकार-साक्षात्कारोदयो विरुध्यते[3]" इति भावः। "स्वस्येतरोपेति। अनेन चरम-वृत्त्युदय-काले उपाध्यन्तराण्यपि सन्ति। टीकायां वृत्तेरेवोपाधित्व-वर्णनम् अन्ततो वृत्ति-मात्रमस्ति इत्यभ्युपेत्य-वाद इति सूचितम्। उपाधि-निवृत्त्या उपहितस्य विषयत्वमिति तु न, वृत्ति-दशायां ह्युपाधेर्विनश्यदवस्थता-मात्रं न तु विनाशोदयः इत्याह ततः स्वेति।[4]" इति दीक्षितैर्व्याख्यातम्।

अयं भावः, तरौ 'हेतु'र्न तदात्मा। नहीत्यादि-प्रागुक्त-वाचस्पत्ये तन्निवृत्त्या ब्रह्म वैत्य स (?) यथायथोदयस्तथा तथा निवृत्तिरित्यर्थो न तूदय-मात्रेण सर्व-निवृत्तिरिति। एतदर्थमेवाविद्या-विरोधि-भावतयेति हेतूक्तिः। दृष्टं चैतद् रवि-बिम्बोदय-तमोनिवृत्त्योः। आवरण-भङ्ग मात्रं चानेनोक्तम्। अत एवान्यच्चेत्या-दिना तज्ज्ञानस्यान्योपाधि-निवर्तकत्वमुक्तम्। एवञ्च न विरोधः। अपिनेतर-समुच्चयः। ग्रन्थे 'शुद्ध'' (ति दु' ?) 'निरुपाधिकमि'ति वृत्ति-रूप-साक्षात्कारात्व-

1. Kalpa-taru on Sariraka M. B., 1.1.1, pp. 57, ll. 12—58, 1.1.
2. Kalpa-taru-parimala, p. 57. 3. op. cit. 4. op. cit.

कांश-दर्शनं ब्रह्मावेशात् स्वरूप-शून्यमिव करोति भवति चेति तत्समाधिरिति "समाधि-भावाच्चे"ति सूत्रे मिश्रोक्त्या स्वरूप-मात्रमित्यर्थ:। मिथ्या-भूतेषु मित्यात्वं प्राप्तेषु। तत: पूर्वं तद्रूपात्। तदा नाशकाभावादाह विद्येति।

जगदुपादानत्वादि-तटस्थ-लक्षणे श्रवण-मात्रेण मिथ्यात्व-निश्चये श्रवण-मनन-परिपाकेण सत्य-ज्ञानत्वादि-ज्ञेय-भाव-च्छेदक-लक्षण-बद्धत्वादावपि मिथ्यात्व-निश्चयात् "तत्त्वमसि" "अहं ब्रह्मास्मी"त्यादौ त्वमहं-पदे सर्वोच्चारयितृत्वाभ्यां बोधके, कस्त्वं कोऽहमित्यादि-जिज्ञासया हि लोके अमुकस्त्वमसि अमुकोऽहमस्मीत्युत्तर-दर्शनात्। एवमत्रापि काणाद-गोतम-सांख्यादि-शास्त्र-पर्यालोचनया आत्मनि बुद्धि-पर्यन्त-जडातिरेकाग्रहे बृत्ते कर्मभि: शुद्ध-चित्तस्य संसारान्निवृत्ते: सुखीत्यभिमानान्निवृत्तेश्च कोऽहमिति प्रश्ने इदमुत्तरम्। तत आपाततोऽभेदान्वये जाते पुनर्विचारेण तस्मिन्नित्य-निर्दुःखत्व-ग्रहे स्वस्मिंश्च तद्वत्व-ग्रहेण बाध-सन्देहे मनन-स्थानीयेतच्छास्त्र-विचार-सहित-श्रुति-गणेन धर्म-मात्रे मिथ्यात्व-ग्रहे धारणया धृति-दार्ढ्यं निदिध्यासने अखण्डार्थ-भानम्। धर्मेषु मिथ्यात्व-ग्रह एव लक्षणेति व्यवह्रियते। श्रवण-मनन-परिपाकादेव ब्रह्मणि चित्त-निवेश-रूप-चित्त-वेद्यात्मकत्वात् धारणा-पद-व्यवहार्ये ततो ध्येयस्य आलम्बनस्य ब्रह्मण एक-रूपत्वेन कारणात्मकं निदिध्यासनमिति सिद्धान्तेति भाव:। दृष्टश्चैव शुक्ति-रजतादौ। शुद्धं निरुपाधिकमित्यत: सोपाधिकमशुद्ध-मित्यस्य भिन्नार्थत्वं सार्वजनीनमेव। अन्यथा यथ्यापते:(?)। एतदग्रे 'तरावि'त्यादि, 'समुच्चय' इत्यत: प्रागुक्तम्। ग्रन्थो द्रष्टव्य:।

गन्थे 'उपाधौ'ति, स्व-स्व-रूपावरकेत्यर्थ:। 'वृत्ति-दशायां' तदुदय-दशायाम्। 'मात्र'-व्यवच्छेद्यमेवाह 'नत्वि'ति। तर्हि 'तत:' तादृश-तदुपाधे:, इतरोपाधे:। दोषान्तरमाह 'वृत्त्यवच्छिन्ने'ति। 'न दोष: नानुपहित-विषयता'। तत्-सम्बन्ध इति तस्यास्तेन सम्बन्ध एव चैतन्यच्छायापत्ति:, उपाधिना सम्बन्ध-विशेषेण प्रतिबिम्ब इति भाव:। दोष-द्वयोद्धारक-तृतीय-कक्षां दूषयति "स्फुरदभेद-विवक्षायां, तादर्थ्याध्यास-विषये दुःख-शोकादौ तदानीं सद्रूप-ब्रह्माभेदा-स्फुरणादापरोक्ष्याभावापत्तेरि"ति[1]। एतद्दोषोद्धाराय विशेषण-दाने त्वेतत्-सजातीय-दोषाभावेऽपि अतिव्याप्तिस्तदवस्थैवेत्याह "स्व-व्यवहारानुकूलं यदभिव्यक्त-

1. Kalpa-taru-parimala, p. 56, ll. 10-11.

चैतन्यं तदभेद-विवक्षायाम् अनुमेय-वह्न्यादि-व्यवहारानुकूलेन जीव-चैतन्येन प्रागुक्त-रीत्यैव अभिन्नस्य वह्न्यादेरापरोक्ष्यापातादि"ति[1]।

अयं भावः, अनुकूल-प्रतिकूल-शब्दयोर्हिताहित-शब्दयोः साधारण-परत्वम्, दृष्टश्च तत्र बहुषु प्रयोगः। किञ्च, तयोः स्वाभाविको भेदः। किञ्च जीव-चैतन्य-पदेन तस्यैव ग्रहणम् अन्यथा जीवेनेत्येव वदेत् इति। अत्रैव योजना-भेदेनैतद्दोषोद्धारे त्वाह "स्व-व्यवहारानुकूलो योऽभिव्यक्त-चैतन्याभेदस्तद्वत्त्व-विवक्षायां तत्तदाकार-धी-वृत्ति-समुल्लास-मात्रादपि सम्भवति। व्यवहार-चैतन्या-भेदस्यानपेक्षितत्वेनासम्भवापत्तेरि"ति[2]। अयं भावः। व्यवहार-शब्दस्य साधारण-परत्वं सार्वजनीनम्। अत एव स्व-प्रत्यक्षेति नोक्तम्। किञ्च तस्य शब्द-प्रयोगे रूढिः। तेन तद्ग्रहणे आत्माश्रयोऽपीति। विशेषणान्तर-दाने योजना-भेदेनोक्त-दोष-वारणे तु आह "स्वावरण-निवृत्त्यनुकूल-चैतन्याभेदवत्त्व-विवक्षायाम् आवरण-निवर्तकत्व-ग्रहणाधीनम् आपरोक्ष्य-ग्रहणम् आपरोक्ष्य-ग्रहणाधीनम् आवरण-निवर्तकत्व-ग्रहणम् इति अन्योन्याश्रयापत्तिरि"ति[3]।

अयं भावः, अयं ह्यसावन्योन्याश्रयो नोत्पत्तौ वित्ति (?) वृत्तेरेवावरण-निवर्तकत्वेऽपि अर्थेऽपरोक्षत्व-ग्रहणाधीनं तत्र तद्ग्रहणं तद्रूपे तत्र तद्ग्रहाधीनं तद्ग्रहणमिति सः। किञ्च, वृत्तेर्जडत्वेन स्वतोऽप्रकाशत्वेन तत्-सम्बन्धेन तद्दूरत्वञ्चेति। तावत्-पद-सूचितमाह "एवमुक्त-रूपार्थापरोक्ष्य-निर्वचनायोगात् तदपेक्षम् अपरोक्षार्थ-व्यवहारानुकूलत्वं ज्ञानापारोक्ष्यमिति निर्वचनमप्ययुक्तम्" इति[4]। अतः सिद्धान्तमपि तस्य तेनैव वैपरीत्येनाह; "तस्मात् स्वाविषय-विषयक-ज्ञानाजन्य-ज्ञानत्वं ज्ञानापारोक्ष्यमिति निर्वक्तव्यम्। तच्चाक्षुषादि-वृत्त्यभिव्यक्त-चैतन्येषु नित्याभिव्यक्त-साक्षि-चैतन्येषु चानुगतम्। अनुमिति-शाब्द-ज्ञानादि-भ्यश्च तत्तदविषय-लिङ्ग-शब्दादि-ज्ञान-जन्येभ्यो व्यावृत्तम्"।

"नच विशिष्ट-ज्ञानं विशेषण-ज्ञान-जन्यमित्यभ्युपगमे दण्ड-कुण्डलोभय-स्मृति-जन्य-दण्डि-प्रत्यक्षेऽव्याप्तिः, वस्तु-गत्या यः स्वाविषयस्तद्विषयत्वं यस्य ज्ञानस्य जनकतायाम् अवच्छेदक-कोटि-प्रविष्टं तदजनकत्वस्य विवक्षितत्वात्। उक्त-स्मृतेर्दण्डि-प्रत्यक्षे तदविषय-कुण्डल-विषयत्वेनाजनकतया तत्रापि लक्षण-सत्त्वात्। यदीश्वर-ज्ञानमुपादान-गोचरतया 'बहु स्यां प्रजायेये'तिवत् इदं ज्ञानमस्य स्यादिति

1. op. cit., ll. 11-12. 2. op. cit., ll. 12-13. 3. op. cit. ll. 13-15. 4. op. cit., ll. 15-16.

सङ्कल्प-रूपतया वा कारणमिष्यते तदा तज्जन्ये मूल-ज्ञानेष्वव्याप्ति-वारणाय समानाधिकरणत्वं ज्ञाने विशेषणं देयम्। न च कोलाहले बुभुत्सित-शब्द-ग्रहो बुभुत्सा-जन्यस्तन्मूल-बोधेष्ट-साधनता-ज्ञानेनापि जन्यते इति तत्राव्याप्तिः, बुभुत्सया अन्यथा-सिद्धस्य तस्य शब्द-ग्रह-कारणत्वाभावात्, बुभुत्सोत्तरं शब्दान्तर-ग्रह-प्रतिबन्धे सति क्लृप्त-कारणादेव बुभुत्सित-शब्द-ग्रह इति तत्र बुभुत्साया अकारणत्वाच्च। न च व्याप्ति-ज्ञानत्वावच्छिन्नं सर्वमनुमिति-जनकं [ व्याप्ति-ज्ञानत्वादित्यनुमितावति ] व्याप्तिः, अत्रानुमितेः सामान्यतः सर्व-व्याप्ति-विषयायाः स्व-कारण-ज्ञान-विषय-व्याप्ति-विषयत्व-सत्त्वेऽपि स्व-कारण-व्याप्ति-ज्ञानवत्-प्रकृत-हेतु-साध्य-विशेष-पर-तया तद्विषयत्वाभावेन तस्याः स्वाविषय-विषयक-ज्ञान-जन्यत्वात्।

नचैवमपि हेतुतावच्छेदक-साध्यतावच्छेदक-विशेषावच्छिन्न-हेतु-साध्योपरक्त-व्याप्ति-ज्ञानत्वावच्छिन्न-सर्व-पक्षी-करणे सति उक्तानुमितावतिव्याप्तिः, सामान्य-धर्म-मात्रानवच्छिन्नतया यः स्व-विषयो न भवति तद्विषयत्वस्य विवक्षितत्वात्; तस्यामनुमितौ हेतुतावच्छेदक-साध्यतावच्छेदकयोः सामान्य-धर्म-मात्रानवच्छिन्नत्वेन विषयतया सामान्य-धर्म-मात्रानवच्छिन्नतया तद्विषयत्वस्य सत्त्वात्।"[1] न च सामान्य-धर्म-मात्रेत्यत्र मात्र-पदं व्यर्थमिति वाच्यम् अनुमिति-जनकत्व-रूप-विशेष-धर्मस्य भाने जनकतात्वादि-रूप-सामान्य-धर्मस्यापि भानात्, सामान्य-रूपानवच्छिन्नतया अस्य विषयस्याप्रसिद्धतया स्व-पदेनोक्तानुमितेर्ग्रहीतुमशक्यत्वेन अतिव्याप्ति-तादवस्थ्येन मात्र-पद-सार्थक्यात्। नचैवं विशेष-रूपावच्छिन्नतया यः स्व-विषयस्तदन्य-विषयक-ज्ञानाजन्य-ज्ञानत्वमेवोच्यतां किं सामान्य-धर्म-मात्रानवच्छिन्नत्व-घटितेनेति वाच्यम्, कारणीभूत-ज्ञान-विषयस्य सामान्य-रूप-मात्रावच्छिन्नस्य सामान्य-रूप-मात्रानवच्छिन्नात् स्वविषयाद् भेद-द्योतनार्थं तद्-घटितस्योक्तत्वात्। न च तथाप्यनुमिति-जनकत्व-व्याप्य-व्याप्ति-ज्ञान-विरुद्ध-व्याप्ति-ज्ञानं तदन्य-व्याप्ति-ज्ञानञ्चानुमिति-जनकमित्याकारानुमितावतिव्याप्तिः, तत्र मात्रानवच्छिन्नतया तद्विषयात् अनुमिति-जनकत्व-व्याप्ति-ज्ञानत्व-रूप-पक्षतावच्छेदकाद् अन्यो यस्तद्विषयकत्वस्य तज्जनके परामर्शे अभावादिति वाच्यम्, अनुमिति-जनकत्व-व्याप्य-व्याप्ति-ज्ञानत्व-विशिष्टानुयोगिक-

1. Kalpa-taru-parimala, p. 56, ll. 16-29.

स्यानुमिति-जनकत्व-व्याप्य-व्याप्ति-ज्ञानत्व-प्रतियोगिकस्य सम्बन्धस्य उक्तानुमित्य-विषयस्य उक्तानुमिति-जनक-परामर्श-विषयत्वात् ।

"नचानुपलब्धि-प्रमाण-जन्याभाव-ज्ञाने अतिव्याप्तिः योग्यानुपलब्धेः प्रमाण-त्वात्, योग्यतायाश्च यद्यत्राधिकरणे प्रतियोग्यभविष्यत् तदा भूतलमिवाद्रक्ष्यत इति तर्क-रूपत्वेन अनुपलब्धि-ज्ञानस्य स्वाविषय-विषयक-तर्क-रूप-ज्ञान-जन्यत्वात् । स्मृतौ स्वसमान-विषय-स्वविषय-पूर्वानुभव-संस्कार-जन्यायाम् अति-व्याप्ति-वारणार्थम् अग्रिम-ज्ञान-पदम् अनुभव-परं बोध्यम् । एवञ्च प्रत्यभिज्ञाया-स्तत्तांशेऽपि नातिव्याप्तिः तस्यास्तदंशे स्मृतित्वाङ्गीकारात् । एवम् अपरोक्ष-ज्ञान-लक्षण-व्यवस्थितौ तज्जन्य-व्यवहार-योग्यत्वमर्थापरोक्ष्यमिति तन्निर्वचनं द्रष्टव्यमि"ति[1] । अयं भावः । विशेष्य-मात्रं विशेषण-मात्रं च अतिप्रसक्तम् अजन्य-ज्ञानत्वम् अव्याप्ति-ग्रस्तं ज्ञानाजन्य-ज्ञानत्वमपि तथेति 'विशिष्टमु'क्तम् । ज्ञानस्य योऽविषयो यस्येत्यर्थः । आदिनोपमितिः, 'अभ्युपगम' इत्यनेन वस्तुतोऽयं दोष एव नेति । चितंपकत्व(?)विशिष्टस्यावच्छेदकत्वादाह 'कोटी'ति । 'यदीत्य'पि प्रागवत् । पक्षान्तरमाह 'बहु स्यामि'ति । 'उक्ते'ति चाक्षुषादि-वृत्त्यभिव्यक्त-चैतन्येष्वित्यर्थः । 'ज्ञाने' आद्ये हलेत्स्यति(?) । 'तत्र' शब्द-ग्रहे । 'तस्य' बोधिष्ट-साधनता-ज्ञानस्य । नन्वेवमपि परम्परया तस्य तत्त्वमेवात आह 'बुभुत्से'ति । 'कृत्स्ने'ति श्रोत्र-सन्निकर्षेत्यर्थः । 'सर्वमि'ति स्पष्टार्थम् । 'तत्र' तस्याः, सामान्यतो व्याप्ति-ज्ञानत्वा-वच्छिन्ने वा । अनुमितित्वेन ज्ञान-द्वारा व्याप्ति-विषयत्वम् । 'तदि'ति सर्व-व्याप्तौ-त्यर्थः । घटत्व-जातिमानयमिति प्रत्यक्षे तु नाव्याप्तिः । विशेषण-ज्ञानस्य अहेतु-त्वात्, तदभ्युपगमेऽपि जातित्व-रूप-सामान्य-धर्मावच्छिन्नतया घटत्वस्य स्व-विषय-त्वेऽपि तन्मात्रावच्छिन्नतया स्वाविषयत्वेन सामान्य धर्म-मात्रानवच्छिन्नतया तद-विषयत्वस्य सत्त्वात् । एवं विशेष-दर्शन-जन्य-स्वविषयोत्तर-प्रत्यक्षेऽपि नाव्याप्तिः । करादेस्तत्त्वेन अवयवत्वेन च दर्शनात्, अन्यथाऽतिप्रसङ्गापत्तेः । 'लब्धि-ज्ञानस्य' तज्ज-ज्ञानस्य । अयं भावः, विशिष्टस्य प्रमाणत्वोक्त्या उभयोः पृथक् कारणत्वं सूचितम् । तथा च तदभावे स्व-विषयकत्वेन दोषेऽपि तदादाय तज्जन्यत्वान्नाति-प्रसङ्ग इति । 'योग्यत्वमि'ति इदं फलोपहितं बोध्यम् । चरम-वृत्त्युदय-कालेऽपि विषयत्ववद्योग्यत्वस्य सत्त्वमेवेति न दोषः । दीक्षितैरप्यैतस्यैव प्रतिपाद्यत्वेन तदुक्त-तदुद्ग्रन्थ-मूलं कीदृक् तद् दुर्वचमिति दिक्[10] ।

1. Kalpa-taru-parimala, p. 56, M. 30-34.

'ऐतिह्यमि'तिहास-पुराणादिकम् । ज्योति:शास्त्रस्याप्यत्रान्तर्भावो द्रष्टव्य: । अनुमीयते स्व-मूल-भूत-स्मृति-वाक्यमनेने'त्यनुमान:' शिष्टाचार: । तस्य च स्मृत्यनुमापकत्वमाचार्यैर्विस्पष्टमभिहितम्—

इतिहासो भारतम् । आदिनोपपुराणम् । न्यूनतां परिहरति ज्योतिरिति । पुंस्त्व-श्रुतिराहानुमीति । तत्र मानमाह तस्य चेति, शिष्टाचारस्य चेत्यर्थ: ।

"ये[1] ब्राह्मणा आर्यावर्तनिवासिन: कुम्भी-धान्या अलोलुपा अगृह्यमाण-कारणा: किञ्चिदन्तरेण कस्याश्चिद् विद्याया: पारं गतास्ते शिष्टा: ।"

इति "पृषोदरादीनी"ति[2] सूत्रे भगवान् पतञ्जलि: । स्वाभाविक-कुम्भी-मात्र-धान्या:, विहित-बुद्ध्या[3] नित्यादि-कर्म-कर्तार:, विनैवाभियोगादिना सर्व-विद्या-पारगा दिव्य-ज्ञानिन इति तदर्थ: । तदुक्तं हरिणा—

"आविर्भूत-प्रकाशानामनुपप्लुत-चेतसाम् ।
अतीतानागत-ज्ञानं प्रत्यक्षान्न विशिष्यते ॥
अतीन्द्रियानसंवेद्यान् पश्यन्त्यार्षेण चक्षुषा ।
ये भावान् वचनं तेषां नानुमानेन बाध्यते ॥"

इति । आर्यावर्तश्चात्र—

"आ समुद्राच्च पूर्वस्मादा समुद्राच्च पश्चिमात् ।
तयोरेवान्तरं[4] गिर्योरार्यावर्तं प्रचक्षते[5] ॥"

इति मनूक्तो न । किन्तु—

"हिमवद्विन्ध्ययोर्मध्ये यत् प्राग् विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्य-देश: प्रकीर्तित:[6] ॥"

इति तत: पूर्वं तदुक्त एव । तत्र भगवतोक्तम्—"प्रागादर्शात् प्रत्यक् कालकवनाद् दक्षिणेन हिमवन्तम् उत्तरेण पारियात्रमि"ति[7] । 'आदर्श:' विनशनाख्ये कुरुक्षेत्रे पर्वत: । 'कालकवनं' प्रयाग: । 'पारियात्रो' विन्ध्य:[8] । आचार्यै: मीमांसा-वार्त्तिक-

1. v.r. A. ये ते ।
2. MahB. on Ast., 6. 3. 109.
3. v.r. B. no बुद्ध्या ।
4. v.r. B. अन्तरा ।
5. Manu, 2. 22, p. 33, v.r. समुद्रात्तु वै पूर्वात्......विदुर्बुधा: ।
6. Manu, 2. 21, p. 33, v.r.......विन्ध्ययोर्मध्यं......।
7. MahB. on पाणिनि's Ast., 6. 3. 109.
8. Add. r. कौर्मेऽपि "आर्ये कृते न धर्मोऽस्ति त्रेतायाञ्च प्रवर्तित: । द्वापरे व्याकुलीभूत्वा प्रणश्यति

"आचाराच्च स्मृतिं ज्ञात्वा स्मृतेश्च श्रुति-कल्पनम् ।"

इति । तदेवं स्मृत्यादीनां चतुष्टयं सम्पन्नम् । 'एतैश्चतुर्भिः 'सर्वै'रप्यादित्य-मण्डलं प्रमीयत इति मन्त्रस्यार्थः । ननु स्मृत्यादीनि मण्डले[1] साधकत्वेनो-लोपन्यस्तानि, न तु[2] काल-साधकत्वेनेति चेन्मैवम्, मण्डलस्य सार्वजनीन-[3] प्रत्यक्ष-सिद्धत्वेन तत्र स्मृत्याद्यनुपयोगात् । काल-विवक्षयैवात्र काल-निर्वाहके मण्डले [4]तान्युपन्यस्तानि । तथा च मण्डल-द्वारा कालस्तैः प्रमीयते[5] । काल-विवक्षा चोत्तर-मन्त्रेष्वतिस्फुटा । तत्रानन्तरो मन्त्र एवमाम्नायते—

"सूर्यो मरीचिमादत्ते सर्वस्माद् भुवनादधि ।
तस्याः पाक-विशेषेण स्मृतं काल-विशेषणम्[6] ॥"

इति । तस्यायमर्थः[7] । भुवन-गतं सर्व[8]-भूत-जालमधिकृत्य रस-वीर्य-विपाका-

---

क्तिः । [9]तदिति । 'एवा'र्थमाहापीति । यादृशमिदं मण्डलं भवति, यथा च प्रवर्तते, यथा च मन्वन्तरादि-भेद-भिन्नं कालं प्रवर्तयति, यथा[10] चोदक-सृष्ट्यादिना विश्वमुत्पादयति, तत् सर्वं स्मृत्यादि-प्रमाण-सिद्धम् । हे इष्टके, त्वं तथा-विध-मण्डल-स्वरूपाऽसीति स्तुतिः । एतेऽष्टाविष्टकोपधान-मन्त्राः ।

अत्र मन्त्रे । एवमग्रेऽपि । तथा च प्रतिज्ञा-हानिः । तत्र मण्डले । तथा च लक्षणेत्याह कालेति । जन्य-कालेत्यर्थः । तस्य तन्निर्वाहकत्वञ्च स्व-क्रिया-द्वारेति स्पष्टं मञ्जूषायाम् । विपरीतार्थ-निरासायाह तथा चेति । श्रुत्यभि-मतमेवेदमित्याह कालेति । तत्र उत्तर-मन्त्राणां मध्ये । तत्र ल्यब्लोपे पञ्चमी-

---

कथौ पुनः । एवं वै विविधो धर्मः शिष्टाचार इहोच्यते । विधौ शब्दस्य तिष्ठन्ति शेषे शिष्टाः प्रचक्षते । मन्वन्तरेषु ये शिष्टा इह तिष्ठन्ति धार्मिकाः । मनुः सप्तर्षयश्चैव लोक-सन्तान-कारकाः । तिष्ठन्तीह च धर्मार्थं ताञ्छिष्टान् परिचक्षते । तैः शिष्टैश्चरितो धर्मः स्थाप्यते वै युगे युगे । मानयोक्ता दण्डनीति पूजार्णांश्च मोव्यताः (?) । शिष्टैराचर्यते तस्मात् सुतश्चैव मनुक्षये (?) । पूर्वं पूर्वं गतत्वाच्च शिष्टाचारः प्रकीर्तितः । दानं सत्यं तपोऽलोभो विद्येज्या-पूजनादयः । अष्टौ गीति-पवित्राणि शिष्टाचारस्य लक्षणम् । शिष्टा यस्मात् चरन्त्येनं मनुः सप्तर्षयश्च ह । मन्वन्तरेषु सर्वेषु शिष्टाचारस्ततः स्मृतः । विज्ञेयः श्रवणाच् श्रौतः स्मरणात् स्मार्त उच्यते । इज्या वेदात्मकः श्रौतः स्मार्तो वर्णाश्रमात्मकः" । अन्यत्रापि, "शिष्टाचारस्तृतीयस्तु श्रुति-स्मृत्योरलाभतः । धर्मेणाधिगतो यैस्तु वेदः स-परिबृंहणः । ते शिष्टा ब्राह्मणा ज्ञेया नित्यमात्म-गुणान्विताः । पुराणं धर्म-शास्त्राणि वेदानामुपबृंहणम् । एकस्माद् ब्रह्म-विज्ञानं धर्म-ज्ञानं तथैकतः ॥" इति ।

1. L. मण्डल···। 2. तु not found in C. 3. L. सर्व-जनीन ।
4. L. add. साधकत्वेन तत्र । 5. L. प्रतीयते । 6. Tait Aran, 1. 2. 2.
7. L. अस्यायमर्थः । 8. सर्व not found in I.
9. Add. r in B. एवं चेत्यादिना पदार्थानुक्त्वा वाक्यार्थ-द्वयमाह । 10. v.r. A. तथा ।

दिभिस्तत्तदनुग्रह-समर्थं मरीचिं[1] सूर्यः स्वीकरोति। तत्कृतेन च[2] भूत-पाक-विभेदेन निमेषादि[3]-परार्ध-पर्यन्तः काल-विभेदोऽस्माभिरवगतो भवतीति। काल-प्रतिपादकानि च स्मृत्यादीनि उदाहरामः। तत्र मनुः, "कालं काल-विभक्तिं चे"ति[4] सृष्टि-प्रकरणे कालं व्यवजहार। याज्ञवल्क्योऽपि, "श्राद्ध-कालाः प्रकीर्तिता"

---

त्याह भुवनेति। अधीति स्वीकृत्येत्यर्थः। तत्-फलितमाह[5] रसेति। तद् जालम्। "तत्तदि"ति-पाठे प्रत्येकं तत्। "मरीचिः स्त्री-पुंसयोरि"त्युक्तेराह समर्थ-मिति। मरीचिं सर्व-व्यवहार-हेतुकं चिद्रश्मिम्। जगदादाविति शेषः। "तस्या" इति कर्तरि षष्ठी, मरीचेरित्यर्थः। तदाह तदिति। मरीचीत्यर्थः। "विशेषा"र्थो विभेदः, पदार्थ-परिपाक-तार-तम्यम्। "काले"त्याद्यर्थमाह [6]कालेति। "स्मृता"-र्थोऽवगीति[6]। आदौ तावद् वीजं रश्मि-कृतेन केनचित् पाकेनाङ्कुरीभवति, स चाङ्कुरः पाकान्तरेण काण्डीभवति, तच्च काण्डं पाकान्तरेण पत्र-पुष्पाण्युत्पादयति, तच्च पुष्पं पाकान्तरेण फलीभवति। एवं काल-कृत-तत्तत्-पदार्थावस्था-दृष्ट्या[7] तदुचिताः क्षण-मुहूर्त-दिवस-पक्ष-मासादि-रूपाः काल-विशेषा अस्माभिर्निर्णीयन्ते। ईदृश-काल-रूपा त्वमसीति इष्टका-स्तुतिः। एवं "नदी[8]वे"त्यादावपि[9] तत्तत्-पानीय-यन्त्रादि[10]-परिच्छिन्न-किञ्चित्-क्षण-समूह-परिच्छिन्ना सूर्यादि-क्रिया च निमेषादि-परार्ध-पर्यन्त-तत्तद्भेदानुमापिका[11], क्षणानां त्वतीन्द्रियतयाऽनुमेयत्वेन चास्मदादीन् प्रत्यहरा[12]द्युपाधित्वासम्भवात् अतीन्द्रिय-द्रष्टृभिर्योगिभिस्तत्तत्-क्षण-समूह-परिच्छिन्न-सूर्य-क्रिया-परिच्छिन्नत्वमहरादीनां ज्ञात्वा तत्तत्-काल-नियामकत्वेन यन्त्र-पानीय-पलानां[13] छायादीनाञ्च निर्णय-पूर्वकं नियमनादिति भावः। [14]ननु कानि [15]स्मृत्यादीन्यत आह कालेति। चो वाक्यालङ्कारे[16]। तत्र तदन्तर्गत-

---

1. L. तदनुग्रह-समर्थ-मरीचिः। 2. च not found in C. 3. C. निमेषादिः, L. निमेषादपि।
4. Manu, 1. 24, p. 10, v. r. काल-विभक्तिश्च।
5. v.r. B. मेवाह। 6-6. not found in B.
7. v.r. B. तत्पदार्था साइष्टा।
8. v.r. A. नद्दी। 9. add. r. B. कालेति। स्मृतार्थोऽवगीति। 10. v.r. B. पत्रादि।
11. v.r. B. तद्भेदानुमापिका। 12. v.r. B. प्रहरा। 13. v.r. B. पलार्णा।
14. add. r. B. परार्धेति परार्धेत्यनेन—स्मृ स्य (?) परमावधिः पर इति सूचितम्। तदुक्तं कौर्मे "काल-संख्या समासेन परार्ध-द्वय-कल्पिता। स एव स्यात् परः कालः……दन्ते। निजेन तस्य मानेन आयुर्वर्ष-शतं स्मृतम्। तत्पराख्यं तदर्धञ्च परार्द्धमभिधीयते"॥ इति। अत्र परानुक्तिस्तु व्यवहारानुपयोगादिति बोध्यम्।
15. add. r. B. तानि। 16. add. r. B. प्रागुक्त-क्रमेणेति शेषः।

इति[1]। एवमन्यास्वपि स्मृतिषूदाहार्यम्। श्रुतिष्वपि, "क्षतं यत् स्वप्नी[2] विचिनोति काले" इति[3] बह्वृचाः। "अहमेव कालो, नाहं कालस्ये"ति तैत्तिरीयकाः[4]। "का च सन्ध्या कस्य सन्ध्यायाः काल" इति सामगाः। योग-शास्त्रेऽपि संयम-विशेषाद् धारणा-ध्यान[5]-समाधि-त्रय-रूपाद् योगिनोऽतीतादि-कालं प्रत्यक्षतः पश्यन्तीत्यभिहितम्। तथा च पातञ्जल-सूत्रं—"परिणाम-त्रय-संयमाद् अतीतानागत-ज्ञानम्[6]" इति।

साक्षि-प्रत्यक्षमपि, अहमस्मिन् काले निवसामीत्यनुभवस्तावत् सर्व-जनीनः। न चासौ बाह्येन्द्रिय-कृतः, कालस्य रूपादि-हीनत्वात्। नापि मानसः, तार्किकैस्तदनङ्गीकारात्। नाप्यनुमानादि-जन्यः, अपरोक्ष-प्रत्ययत्वात्। अतः सामग्र्यभावेऽपि अपरोक्ष-दर्शनात् साक्षि-प्रत्यक्षमेतदित्यौपनिषदा मन्यन्ते। इतिहासेऽपि महाभारते पठ्यते

"प्रहरौ घटिका-न्यूनौ प्रहरौ घटिकाधिकौ।
स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम्॥"

इति। पुराणेऽपि,

---

स्मृति-मध्ये। [7]अभ्यर्हितत्वादाह मनुरिति[7]। "ध्यान-धारणे"ति पाठः। परि-णामेति। अस्य धर्मिणोऽयं धर्म-परिणामस्तस्य चायं लक्षण-परिणामः लक्षणस्य चायमवस्था-परिणाम इत्येवमनुक्षणं यत्र कुत्रचिदर्थे संयमात्तत्-साक्षात्कारे सति सर्व-वस्तु-साधारणेषु तेषु परिणामेषु अतीतानागत-ज्ञानं प्रणिधान-लेशादेव भवतीत्यर्थः। एकत्र ध्यानादि-त्रयं संयमः। अन्य-विषय-संयमात् प्रतिनियत-पदार्थान्तर-साक्षात्कारो योगज-धर्माद् भवतीत्यत्र शास्त्रं प्रमाणं, धर्म-विशेषात् स्वर्ग-विशेषो भवतीत्यत्रेवेति भावः।

घटिकेति यदीत्यादिः। सः घटी-द्वयात्मकः। पितॄणामिति, तत्रेति शेषः। पुराण इति, इदं कौर्मम् इत्यग्रे स्फुटम्। विष्णु-पुराणेऽपि—

---

1. Yajn S., 10, 218, p. 67.
2. C. स्वप्नी, "स्वानमिव जनं हन्ति या सा स्वप्नी, काल-शक्तिरित्यर्थः" ; D. स्वप्ने ; L. यः स्वप्नी।
3. "इति" not found in L. 4. E. तैत्तिरीयाः। 5. comm. ध्यान धारणा···।
6. Yoga S., 3. 16, p. 61 ; v. r. in I. अतीतानागतादि-ज्ञानम्।
7-7. Not found in A.

"अनादिरेष भगवान् कालोऽनन्तोऽजर: पर: ।"

इति । शिष्टाश्च पौर्णमासाख्ये काले अङ्क्किनेवुक-संज्ञकान्[1] स्व-स्व-कुलोचितान् देवता-विशेषेभ्य:[2] क्षीर-दध्यादि-समर्पणादिकान् धर्म-विशेषान् भानु-वारादि[3]-काल-विशेषे समाचरन्ति । तदेवमनेक-प्रमाण-प्रमिते काले प्रमाणाभाव-रूपश्चतुर्थ-पक्ष: कथमाशङ्क्यते ।

नापि प्रयोजनाभावादिति पञ्चम: पक्षो युज्यते । तार्किकैस्तावत् सर्वोत्पत्तिमन्निमित्त-कारणत्वमुद्घोषितम्[4] । लोके च कृष्याद्युपयोग: काल-विशेषस्य कृषीवलादिभिर्व्यवह्रियते । गृह[5]-प्रवेश-प्रयाणाद्युपयोगोऽपि[6] ज्योति:-शास्त्र-प्रसिद्ध: । श्रौत-स्मार्त-कर्मोपयोगस्तु प्रदर्शयिष्यते । तस्माच्छ्रद्धा-जाड्य कृतस्तव प्रद्वेष इत्ययं षष्ठ: पक्ष: परिशिष्यते । तथा च पापात्मनस्तव बुद्ध्यपराधं पुण्यात्मनि माधवाचार्ये समारोपयन् कया वा शिक्षया न दण्ड्योऽसि । तदेवं कालस्य प्रत्याख्यातुमशक्यत्वात्तन्निर्णयोद्यम: सफल इति सुस्थितम् ।

---

"प्रकृति: पुरुषश्चैव नित्यौ कालश्च सत्तम ।" इति ।

देवी-पुराणेऽपि—

"विभुर्नित्योऽस्थिर: कालोऽवस्था तस्य तु हेतुजा ।" इति ।

रामायणेऽपि हिरण्यगर्भ-दूतत्वेन गतस्य[7] कालस्य रामं प्रति वाक्यं—

"तवाहं पूर्व-सद्भावे पुत्र: पर-पुरञ्जय ।
माया-सम्भावितो वीर काल: सर्व-समाहर:[8] ॥"

इति । पूर्व-सद्भावे सत्ता-रूप-ब्रह्म-सद्भावे । करिष्यमाण-संसारस्यानुज्ञा-प्रतिबन्धाभ्यां सृष्टि-स्थिति-संहार - निग्रहानुग्रह[9]-निर्वाहक: कालाख्यो मायाया: परिणाम इत्यर्थ: । तुरीयमाह शिष्टाश्चेति । एते च दाक्षिणात्यैरेव क्रियन्ते । स्व-स्व-कुलागतं करंजार्कादि[10]- स्थावर - देवता-पूजादिकम् आङ्कीनेवुक[11]-शब्देनोच्यते इति न्याय-मालादौ स्पष्टम् । उपसंहरति तदेवमिति । [णत्वमिति (?) मन्निमित्तमिति]

---

1. I. अङ्कीनेवक-संज्ञकान् ; H. अङ्क नेवुक-संज्ञकान् ।
2. C. देव-विशेषेभ्य: । 3. J. भानु-चारादि । 4. C. उद्बोधितम् । 5. D. ग्रह ।
6. अपि not found in C. 7. v.r. B. आगतस्य ।
8. Rama, 7. 104. 2., p. 306, 9, v.r., तवाऽं पूर्वके भावे ।
9. अनुग्रह not found in B.
10. v.r. A. करजार्कादि । 11. v.r. A. माह्रीनेवेक ।

ननु कतरः कालोऽत्र निर्णीयते। किं केवल-कालः, उत काल-कालः ? ननु किमित्यप्रसिद्धया भाषया भीषयसि। न भीषयाम्यहम्। किन्त्वस्त्येव कलयितव्य[1]-भेदात् कालस्य द्वैविध्यम्[2], येन प्राणिदेहादयोऽतीत-वर्तमानादि-रूपेण कलयितव्याः[3] स केवलः कालः, स च तत्त्वप्रकाश-वचनेन पूर्वमुदाहृतः—"कलयति जगदेष कालोऽत" इति। [4]तादृशोऽपि काल उत्पत्ति-स्थिति-विनाश-कारिणा येन कलयितव्यः स काल-कालः[4]। स च वासिष्ठ-रामायणे दर्शितः—"कालोऽपि कल्यते[5] येने"ति। श्रुतिश्च भवति

"स विश्वकृद्विश्वविदात्म-योनिर्ज्ञः काल-कालो गुणी सर्व-विद्यः।
प्रधान-क्षेत्रज्ञ-पतिर्गुणेशः संसार-मोक्ष-स्थिति-बन्ध-हेतुः[6] ॥"

---

षष्ठी-तत्पुरुषः। तथा च तत्परिशेषे च। दण्डशोऽसीति, अपि तु सर्व-प्रकारैर्दण्डशोऽसीत्यर्थः। परम-प्रकृतमुपसंहरति तदेवमिति। सु सम्यक्।

एवं सिद्धस्य कालस्य निर्णय-योग्यतां वक्तुं शङ्कते नन्वित्यादिना। तदेव विशिष्याह किमिति। [7]तटस्थः शङ्कते नन्विति। भाषेति, लोक-शास्त्राप्रसिद्ध-शब्देनेत्यर्थः। पूर्व-पक्षी उत्तरमाह न भीति। [8]तत्-प्रतीतौ गमकमाह[8] कलयीति[9]। तत्रादावाद्यमाह येनेति। व्यवहितान्वयः। [10]कलयीति परिच्छेत्तव्या इत्यर्थः। अग्रे 'उत्पाद्य' इत्यर्थः। द्वितीयमाह तादृश इति। श्रुतिः श्वेताश्वतरोपनिषत्स्था।

स प्रकृतः परमात्मा। विश्वं स्व-मायया करोति तदपरोक्षतया वेति। आत्मा त्वं-पदार्थ-भूतः प्रत्यगात्मा, स एव योनिस्तत्-पदार्थ-भूत-जगत्-कारणम्। ज्ञश्चित्-स्वरूपः। कालस्य सर्वोपसंहर्तुरपि काल उपसंहर्ता। गुणी अपहत-पाप्मत्वादि-गुणकः। सर्वा विद्या अस्य, 'तस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवति'। प्रधान-क्षेत्रज्ञयोः प्रकृति-जीवयोः पतिः स्वामी। गुणेशः सत्त्व-रजस्तमसां नियामकः। संसारात् मोक्षस्य हेतुः सम्यग्ज्ञाततया, तत्र स्थिति-लक्षण-बन्धस्याज्ञाततया हेतुः कारणमिति तदर्थः।

---

1. E. कल्पितव्य। 2. C. काल-द्वैविध्यम्। 3. C. कल्पितव्याः।
4-4. Not found in E and L. 5. C. कल्पाति ; E. कल्पते।
6. C. संसार-बन्ध-स्थिति-मोक्ष-हेतुः। 7. add. r. अत्र। 8-8. v.r. A. वस्तुतातत्त्वाद्याह।
9. v.r. A. कलयेति। 10-10. (p. 64.) v.r. not found in A.

इति[1]। कूर्म-पुराणेऽपि—

"अनादिरेष भगवान् कालोऽनन्तोऽजरः परः।
सर्वगत्वात् स्वतन्त्रत्वात् सर्वात्मत्वान्महेश्वरः।
ब्रह्माणो बहवो रुद्रा अन्ये नारायणादयः[2]।
एको हि भगवानीशः कालः कविरिति स्मृतः।
ब्रह्म-नारायणेशानां त्रयाणां प्राकृतो लयः।
प्रोच्यते काल-योगेन पुनरेव च सम्भवः।
परं ब्रह्म[3] च भूतानि वासुदेवोऽपि शङ्करः।

---

कविः क्रान्तदर्शी। प्राकृत इति, नित्य-नैमित्तिक-प्राकृतात्यन्तिकानां चतुर्णां प्रलयानां मध्ये महदादि-विशेषांत-लयः प्राकृत इत्यर्थः। "एवं ब्रह्मा चे"ति पाठः। अत्रैव अन्यत्रापुक्तम्[4]—

"प्रोच्यते भगवान् कालो हरः प्राणो[5] महेश्वरः। तस्य[6] सर्वमिदं प्रोतमोतञ्चैवाखिलं जगत्। स कालोऽग्निर्हरो रुद्रो[7] गीयते वेदवादिभिः॥ कालः सृजति भूतानि कालः संहरते प्रजाः। सर्वे कालस्य वशगा न कालः कस्यचिद्वशे[8]॥ प्रधान[9]-पुरुषस्तत्त्वं महानात्मा त्वहंकृतिः। कालेनान्यानि तत्त्वानि समावि[ष्टानि]योगिनाम्॥ तस्य सर्व-जगत्-सूतिः[10]शक्तिर्मायेति विश्रुता। ययेदं[11] भ्रामयेदीशो मायावी परमेश्वरः[12]॥ सैषा माया त्मिका शक्तिः[13] सर्वाकारा सनातनी। विश्व-रूपं महेशस्य सर्वदा सम्प्रकाशयेत्॥ अन्यास्च शक्तयो मुख्यास्ता देवेन विनिर्मिताः[14]। ज्ञान-शक्तिः क्रिया-शक्तिः प्राण-शक्तिरिति त्रयम्। मायावी सर्वशक्तीनां कालः कलयतां प्रभुः[15]॥ करोति कालः सकलं संहरेत् काल एव हि। कालः स्थापयते विश्वं कालाधीनमिदं जगत्॥ लब्ध्वा देवाधिदेवस्य समाधिं[16]

---

1. SvetU., 6. 16, p. 114; ज्ञः omitted; v.r. in the second pada; काल-कारः......सर्व-विद् यः।

2. Kurma P., पूर्व-भाग. chap. 5, p. 25, vr. 20-21, v.r.......कालोऽनन्तोजरोऽमरः ......कविरिति श्रुतिः।

3. Comm. एवं ब्रह्मा च। 4. Kurma P., पूर्व-भाग, 12. 25—21, 23—25.

5. v.r. हरि-प्राणो। 6. v.r. तत। 7. v.r. कालाग्निर्हरो देवो।

8. v.r. कस्यचिद्वशः। 9. v.r. प्रधानं। 10. v.r. सर्व-जगन्मूर्तिः।

11. v.r. त्वयेदं। 12. v.r. पुरुषोत्तमः। 13. v.r. मायात्मिका शक्तिः।

14. v.r. तस्य देवस्य निर्मिताः।

15. v.r. सर्व-शक्तीशः कालः काल-कारः प्रभुः। 16. v.r. सन्निधिं।

कालेनैव च सृज्यन्ते स एव ग्रसते पुनः ।
तस्मात् कालात्मकं विश्वं स एव परमेश्वरः[1] ॥"

इति । विष्णुधर्मोत्तरेऽपि,

"अनादि-निधनः कालो रुद्रः संकर्षणः स्मृतः ।
कलनात् सर्व-भूतानां स कालः परिकीर्तितः ॥
कर्षणात् सर्व-भूतानां स तु सङ्कर्षणः स्मृतः ।
सर्व-भूत-शमित्वाच्च स रुद्रः परिकीर्तितः ।
अनादि-निधनत्वेन स महान् परमेश्वरः[2] ॥"

इति । ज्योतिःशास्त्रेऽपि,

"भूतानामन्तकृत् कालः कालोऽन्य-कलनात्मकः ।"

इति । तत्रैवं सति द्वयोर्मध्ये काल-कालोऽत्र तावन्न निर्णेतव्यः, तस्य धर्मानुष्ठाने अहेतुत्वादनुपादेयत्वाच्च । यस्त्वितरो मास-पक्ष-तिथ्यादि-रूपः सोऽपि ज्योतिःशास्त्र एव सम्यङ् निर्णीत इति कृतमनया काल-निर्णय-प्रवृत्त्येति प्राप्ते ब्रूमः । [3]उभयमप्यत्र निर्णेतव्यम्[3] । काल-कालस्य जगदीश्वरस्य सर्वेषु कर्मारम्भेष्वनुस्मर्तव्यत्वात् । अत एव शिष्टाः पुण्याह-वाचनादौ ईश्वरमनुस्मरन्ति—

"सर्वेषु कालेषु समस्त-देशेष्वशेष-कार्येषु तथेश्वरेश्वरः ।
सर्वैः स्वरूपैर्भगवाननादिमान् ममास्तु माङ्गल्य-विवृद्धये हरिः ॥"

---

परमेष्ठिनः । अनन्तस्याखिले[-शस्य] शम्भोः कालात्मनः प्रभोः । प्रधान-पुरुषो माया मायी चैवं प्रभिद्यते ॥" इति ।

कालादेर्योग-त्रयं सृष्टि-क्रमेणाह कलनादित्यादि । तद्‌योग[10]माह कालोऽनेरिति । एवं सन्देहं प्रतिपाद्य पूर्व-पक्षमाह तत्रैवमिति । उक्त-प्रकारेण काले द्वैविध्ये सत्यपि । तयोर्द्वयोर्मध्ये इत्यर्थः । अत्र ग्रन्थे । [4]उक्तार्थे आचारं मानमाहात एवेति[4]। स्मरणमेवाह सर्वेष्विति । तथा समुच्चये[5] । आरम्भे-

---

1. Kurma P., पूर्व-भाग, chap. 5, vr. 18-21 and 22 (a), p. 25 ; v.r....... तयाणां प्रकृतौ लयः......कालेनैव तु......अन्ये नारायणादयः......। The line "तस्मात्......परमेश्वरः" is not traced in it.

2. Visnu Dh. 72. 2-3, p. 43 ; v. r.…सर्व-भूत-समत्वाच्च…। The second and third lines are not traced in the printed edition of the VisnuDh.

3-3. Not found in C. 4-4. Not found in A. 5. add. r. कार्येषु च ।

यस्य स्मृत्या च नामोक्त्या तपोयज्ञ-क्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्[1] ॥"

इति। मासादि-रूप-भेदस्य तु स्वरूपेण निर्णीतत्वेऽपि श्रौत-स्मार्त-कर्म-विशेषेण सह कालस्याङ्गाङ्गिभावो निर्णेतव्यः। यद्यप्यसौ हेमाद्रि-प्रभृतिषु ग्रन्थेषु निर्णीतस्तथाप्यनेकत्र विप्रकीर्णस्यैकत्र संग्रहाय यत्नः[2] क्रियते। तदेवं चिकीर्षितस्य[3] काल-रूपो विषयः संग्रह-रूपं प्रयोजनं चास्तीत्ययं ग्रन्थ आरभ्यते।

"नित्यो जन्यश्च कालौ द्वौ तयोराद्यः परेश्वरः।
सोऽवाङ्मनस-गम्योऽपि देही भक्तानुकम्पया ॥"

इति। नित्य-कालस्य परमेश्वरत्वेऽपि प्रमाणं पूर्वमेवोपन्यस्तम्। परमेश्वरस्य चावाङ्मनस-गोचरत्वे सर्वे वेदान्तास्तदनुसारिस्मृति-पुराणानि तत्त्वविदनुभवश्च प्रमाणम्। भक्तानुग्राहिमूर्ति-स्वीकारस्य तलवकाराख्ये[4] साम-वेद-शाखा-

---

ष्वितुग्रपलक्षणं समास्यादेरपीत्याह यस्येति। द्वितीये आह मासादीति। [5]असौ असावपि[5]। उपसंहरन्ननुबध्नावाह तदेवमिति। ईश्वरस्य नित्य-कालात्मकत्वमुक्तं विशदयितुं चिन्तनीयत्वं प्रतिपादयितुं च कालं विभजते नित्य इति। सोऽवागिति। तथा च विष्णुधर्मोत्तरे—"निमेषादपि सूक्ष्मत्वात् सूक्ष्मात् सूक्ष्मतरो ह्यसि। तस्य सूक्ष्मातिसूक्ष्मस्य कालस्य परमेष्ठिनः॥ दुर्विभाव्या महाभाग योगिनामपि सूक्ष्मता। पद्म-पत्र-सहस्रं तु सूच्या वै भिद्यते[6] यदा॥ सम-कालन्तु तद्भिन्नमबुधो मन्यते जनः। काल-क्रमेण तद्भिन्नं सा तस्य द्विज सूक्ष्मता[7]॥" इति। अवाङ्मनस इति शाकपार्थिवादिः[8]। प्रमाणमिति, "तस्मात् कालात्मकं विश्वं स एव परमेश्वरः"[9] इत्यादीत्यर्थः। अन्यत्रापि "कालः सृजति भूतानि कालः संहरति प्रजाः। सर्वे कालस्य वशगा न कालः कस्यचिद्वश" इति। ननु भवत्वेवं तथापि तस्यावाङ्मनस-गोचरत्वे मानाभावोऽत आह परेति। प्रमाणमिति जातैक-वचनम्। ननु तथापि द्वितीये मानाभावोऽत आह भक्तेति। च

---

1. Garuda P., as quoted by Himadri in Catur VC., श्राद्ध-कल्प, p. 1080. 2. C. संग्रहार्थमत्र यत्नः...। 3. C. and D. add ग्रन्थस्य। 4. H. तलवकाराख्ये। 5-5. add. r. B. निर्णीति......तिः शास्त्रे असावपि। 6. v.r. वेभिद्यते। 7. Visnudharmottara, 72-4—6, p. 43 (b). 8. add. r. B. अवाङ्मानस इति पाठस्तु सुगमः। 9. P. 64.

विशेषे कस्याञ्चिदाख्यायिकायामाम्नायते। तस्यां ह्याख्यायिकायाम् एवमुक्तम्—अग्नि-वायिन्द्रादयो देवा[1] ईश्वरानुगृहीताः सर्वत्र विजयमानाः स्वकीयमेवैतत्सामर्थ्यमित्यभिमन्यन्ते स्म[2]। तान् बोधयितुमवाङ्मनस-गम्यं परमेव ब्रह्म पूज्यां चक्षुर्गम्यां काञ्चिन्मूर्तिं धारयित्वा प्रादुर्बभूव। तया सह वादं कृत्वाऽपि राजस-चित्तावग्नि-वायू ब्रह्म-तत्त्वं[3] नैव बुबुधाते, इन्द्रस्तु सात्त्विक-चित्तो बुबुध इति। वासिष्ठ-रामायणेऽपि शुक्रोपाख्याने शुक्रं मृतमवलोक्य तत्पिता भृगुः क्रुद्धो मारयितारं कालं शप्तुमुद्यतः। तदानीं कालोऽनुग्रहीतुमीदृशेन रूपेणाविर्बभूवेति पठ्यते—

"अथाऽऽकलित-रूपोऽसौ कालः कवलित-प्रजः।
आदि-भौतिकमास्थाय वपुर्मुनिमुपाययौ॥
खड्ग-पाश-धरः श्रीमान् कुण्डली कवचान्वितः।
ऋतु-षट्कमयोदार-वक्त्र-षट्क-समाहितः[4]॥
मास-द्वादशकोद्दाम-भुज-द्वादशकोद्भटः।
स्वाकार-समया वह्व्या वृतः किङ्कर-सेनया॥
स उपेत्य प्रणम्यादौ कुपितं तु[5] महामुनिम्।
कल्प-क्षुब्धाब्धि-गम्भीरं सान्त्व-पूर्वमुवाच ह॥
त्वमत्यन्त-तपा विप्र वयं नियति-पालकाः।
तेन संपूज्यसे पूज्य साधो नेतरयेच्छया॥
मा तपः[6] क्षपयानल्पं[7] कल्प-काल-महानलैः।
यो न दग्धोऽस्मि मे[8] तस्य किं त्वं शापेन धक्ष्यसि॥

---

अपि। तत्तत्य-कर्मेणार्थमाहाग्नीति। हेतु-गर्भ-विशेषणमाहेश्वरेति। एवमग्रेऽपि। धारेति, निवृत्त-प्रेषणादिति न्यायेन णिच्। तया मूर्त्या। आख्याने इत्यस्य पठ्यते[9] इत्यत्रान्वयः। [10]अन्विति भृगुमित्यादिः[10]। ईदृशेन वक्ष्यमाणेन[11]। स्वार्थे मयट्। तेनोद्भटो विकरालः। गम्भीरमिति मुनि-विशेषणम्। पूर्वमिति क्रिया-विशेषणम्। नियतिरदृष्टम्। तेन उत्कृष्ट-तपसा। क्रोधेनाह

---

1. C. देवता। 2. स्म not found in D. 3. C. ब्रह्मत्वम्। 4. D. समन्वितः। 5. D. कुपितं तं ; H. कुपितं च। 6. C. सान्द्रपः। 7. I and D. क्षपयाबुद्धे। 8. C and D...मे...। 9. v.r. A. पच्यते (?)। 10-10. Not found in A. 11. add. r, B. चकवीति अपरिच्छिन्ने त्यर्थः, तदेवाहध्यचेति(?)पाठः सुगमः।

संसारावलयो ग्रस्ता निगीर्णा रुद्र-कोटय: ।
भुक्तानि विष्णु-वृन्दानि केन ग्रस्ता वयं मुने ॥
भोक्तारो हि वयं ब्रह्मन् भोजनं युष्मदादय: ।
स्वयं नियतिरेषा हि नावयोरेतदीहितम् ॥"

इति। न च भक्तानुजिघृक्षया स्वीकृता मूर्तिरीश्वस्यैवेति कश्चिन्नियमोऽस्ति। सर्वात्मकस्य परमेश्वरस्य भक्त-चित्त-प्रियाया: सर्वस्या अपि मूर्ते: स्वकीयत्वात्। अत एव भगवद्गीतायाम्,

"यो यो यां यां तनुं भक्त: श्रद्धयाऽर्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥
स तया श्रद्धया युक्तस्तस्या राधनमीहते ।
लभते च तत: कामान् मयैव विहितान् हि तान्[1] ॥"

इति। विष्णु-रुद्रादि-चेतन-मूर्तिवदचेतन-मूर्तयोऽपि तत्तत्-फल-विशेषार्थिभिरीश्वरत्वेनोपास्या:। तदेतदृग्वेदे समाम्नायते—

"एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगा एतमस्यामेतं दिव्येतं वायावेतमाकाश एतमप्स्वेतमोषधीष्वेतं वनस्पतिष्वेतं चन्द्रमस्येतं नक्षत्रेष्वेतं सर्वेषु भूतेषु।"

इति। वाजसनेयिनोऽपि मण्डल-ब्राह्मणे, "तमेतमग्निमित्यध्वर्यव उपासत" इत्यारभ्य पठन्ति,

---

मा तप इति। संसाराणाम् आवलय:। भोजनेति कर्मणि ल्युट्, सामान्ये नपुंसकं, जातावेक-वचनञ्च। स्वयं स्वाभाविकी। न च नापि। चित्तेष्विति पाठ:। श्रद्धयेति[2] ययेत्यादि:। तां श्रद्धामचलामेव। अहं तत्तत्तनु-युक्त:। तस्या: तन्वा:। राधनं सेवनम्। अन्यदप्याह विष्णुति[3]। एतम् आत्मानम्। महत्युक्थे प्रधान-शस्त्रे। ऋग्वेदज्ञा उपासते तदनुगं ब्रह्मानुसन्दधते। यजुर्वेदज्ञा अग्नौ तत्सम्बन्धिनि क्रतौ। सामगा महाव्रताख्ये क्रतौ। अस्यां पृथिव्याम्। दिवि तेजसि। इत्यारभ्येति[4], इति पठन्तीत्यन्वय:।

---

1. Bhag G., 7. 21-22. 2. इति not written in B. 3. v.r. A. विष्णुचक्षिति (?)।
4. इति not found in B.

"विषमिति सर्पाः सर्प इति सर्पविद ऊर्गिति देवा रयिरिति मनुष्या मायेत्यसुराः स्वधेति पितरो देवयजन इति देव-यजनविदो[1] रूपमिति गन्धर्वा गन्ध इत्यप्सरसस्त[2] यथा यथोपासते तदेव भवति।"

तैत्तिरीयाश्च पठन्ति—"क्षेम इति वाचि योग-क्षेम इति प्राणापानयोः" इत्यादि। पर-ब्रह्मारोपित[2] यद् यावज्जगद्रूपमस्ति तेन सर्वेणाप्युपासनाय परमेश्वरो रूपवान् भवतीति[3] हिरण्मयाधिकरण-मनोमयाधिकरणयोः प्रपञ्चितम्। एवञ्च सति यो यदा यत्कर्माऽऽरभते स तदा तत्कर्मोपयुक्तां कालात्मकस्येश्वरस्य मूर्तिमिष्ट-देवता[4]-रूपेणानुस्मरेत्। अत एव मन्त्र-शास्त्रेषु नाना-विधानि ध्यानान्युपदिष्टानि। लोकेऽप्याविद्वदागोपालं[5] सर्वेऽपि जना एकैकां देवतां स्वेच्छया पूजयन्ति। तदेतद्भगवानाह—

"यजन्ते सात्त्विका देवान् यक्ष-रक्षांसि राजसाः।
प्रेतान् भूत-गणांश्चान्ये यजन्ते तामसा जनाः[6]॥"

तस्मादारभ्यमाण-कर्म-फलप्रदो निजेष्ट-देवता-रूपो[7] नित्य-कालः कर्मारम्भेष्वनुस्मर्तव्य इति सिद्धम्॥

ऊर्क् अन्नम्। रयिः धनम्। देव-यजनम् अविमुक्तादि। उपसंहरति यथेति। क्षेम इतीति। वागिन्द्रिये ब्रह्म क्षेम-रूपेणावस्थितम्। प्राणापानयोः उच्छ्वास-निश्वास-रूपयोः। क्रमात्तद्रूपाभ्यां तदवस्थितमित्युपासीतेत्यर्थः। आदिना "कर्मेति हस्तयोर्गतिरिति पादयोरि"त्यादि। सर्व-तात्पर्यमाह परेति। हिरण्मयेति। "अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्य-श्मश्रु-र्हिरण्य-केश" इत्यादि-विषयके[8], "मनोमयः प्राण-शरीरो भा-रूपः सत्य-सङ्कल्प" इत्यादि-विषयके[9] चेत्यर्थः। प्रकृतमाह एवं चेति, तस्य सर्वात्मकत्वे च सतीत्यर्थः। ...इष्टेति स्वेत्यादिः। ...दिष्टानि एकस्या अपि। जना इति[10], प्रत्येकमिति शेषः। परम-प्रकृतमुपसंहरति तस्मादिति। प्रारम्भेषु तदादिषु। एतेन "नित्यस्यानुपयोगान्न निर्णय" इति दीपिकाकाराद्युक्तमपास्तम्।

1. H देव-जन-विदो। 2. C and D पर-ब्रह्मण्यारोपित। 3. C. रूपवाननुभवतीति। 4. C. मूर्तिं देवता...। 5. C. लोकेऽप्याविद्वदागोपालज्ञनं। 6. Bhag G., 17. 4. 7. H. निजेष्ट-देवतादि-रूपो। 8. अधिकरण, BrahmaS. 1. 1. 7; Chandogya Up. 8. 6. 68. 9. अधिकरण, BrahmaS. 1. 2. 1; श्रुति—Chandogya Up. 3. 14. 2. 10. इति not ound in B.

अथ जन्य-कालं निरूपयामः। ननु कालस्य जन्यत्वे सति कथं प्रलये काल-व्यवहारः। प्रलयः कालः[1], प्रलयोऽतीतः,[2] प्रलयो भावीति। काल-नित्यत्ववादिनस्तवापि समो दोषः। नित्यस्य कालस्य तपन-परिस्पन्दाद्युपाधिभिः परिच्छेदे सत्येतावान् काल इति कालेयत्ता वर्णयितव्या। न च प्रलये तदुपाधयः सन्ति। अतस्तव कथं प्रलय-काले इयत्ता-निर्णयः? अथ सत्कार्य-वादाभ्युपगमेनोपाधयोऽपि वासना-रूपेण सन्ति? तर्हि कालेऽपि तत्समानम्। न चैतावता नित्यत्व-प्राप्तिः, उपाधिषु तदनङ्गीकारात्। अथ मन्यसे इयत्ता-रहितेऽपि प्रलय-काले सृष्टि-कालेयत्ता-वासना-वशादियत्ता व्यवह्रियते। तत्रो-पाध्यायत्वादिर्दृष्टान्तः। यथा कश्चिन्माणवकस्त्रिंशद्वर्ष-वयस्कादध्येतुम् उपक्रम्य संवत्सरमधीत्यास्मदुपाध्याय एकत्रिंशद्वर्ष-वयस्क इत्यध्ययन-रहितेऽप्यतीते वयस्युपा-ध्यायत्वं व्यवहरति, तद्वदियत्ता-व्यवहारः। एवं तर्ह्यनेन न्यायेन काल-रहिते प्रलये काल-व्यवहारः[3] किं न स्यात्। काल-रहितं च प्रलयादिकं वस्त्वस्तीति माण्डूक्यादि-श्रुतयोऽभ्युपगच्छन्ति। तथा च श्रूयते—"यच्चान्यत्त्रि-कालातीतं

---

जन्य-कालानां मध्येऽब्दस्य मुख्यत्वं प्रतिपादयितुं प्रतिजानीते अथेति। तत्र सामान्यं तमाह प्रलयेति। विशेषं तमाह प्रलय इति[4]। प्रतिबन्दीमाह कालेति। समस्तुल्यः, न त्वयमेव। तमेवाह नित्यस्येति। नच नहि। तव नित्यत्ववादिनः। तत् काल-विषयेऽपि वासना-रूपेण सत्त्वम्। एतावता वासना-रूपेण सत्त्वेन, नित्यत्वेऽपि कालस्य [न] वास्तव-नित्यत्वेत्यर्थः। [उपेचिये ? उपाधिष्वि]त्यादि, वासनात्मना स्थिति-पक्षे तव मते कालवदुपा-धीनामपि नित्यत्वापत्तिरतस्तथा सतामपि स्थूल-रूपेणासतां तेषामिवास्याप्य-नित्यत्वमेवेति भावः। एवं तत्र तदभावेऽपि तत्सत्त्वेन विद्यमानेयत्तामुपपाद्य तदभावेऽपि तद्व्यवहारमुपपादयति अथेति। अस्यादृष्टचरत्वं निराचष्टे तत्रेति, तथा तद्व्यवहारे इत्यर्थः। ···त्वादिस्तद्व्यवहारः। समाधत्ते एवं तर्हीति। ननु तादृश-प्रलय-सत्त्वे एव न मानमत आह कालेति। माण्डूक्यादीति। कौर्मे-ऽप्युक्तम्—प्रलयश्चतुर्धा नित्यो, नैमित्तिकः, प्राकृत आत्यन्तिकः। तत्र नित्यं

---

1. D. प्रलय-कालः। 2. H. प्रलय-कालोऽतीतः। 3. C. कालो हि प्रलये काल-व्यवहारः।
5. Add. r. in B. विशेषं तमाह प्रलेति।

तदप्योङ्कार एवे"ति। प्राभाकराश्च अपूर्वस्य काल-त्रयासंस्पृष्टां काञ्चिदवस्थामाहुः। तस्मात्कालः सुखेन जन्यताम्।

स च सामान्य-विशेषाभ्यां द्विविधः। तस्य चोभयस्येश्वराख्यान्नित्यात्[1] कालादुत्पत्तिं मनुराह,

यो भूत-क्षयः स आद्यः। [2]कल्पान्ते त्रैलोक्यस्य[3] क्षयो नैमित्तिकः, महदादि-विशेषाणां क्षयः प्राकृतः, योगिनो[4] ज्ञानादात्यन्तिकः। "चतुर्युग-सहस्रन्तु कल्पमाहुर्मनीषिणः[5]। साम्प्रतं वर्त्तते कल्पो वाराहः सात्त्विको मतः॥ एवं संहार-कारणी शक्तिर्माहेश्वरी ध्रुवा। प्रधानाद्यं विशेषान्तं दहेद्भुवमिति श्रुतिः॥ योगिनामपि सर्वेषां ज्ञान-विन्यस्त-चेतसाम्। आत्यन्तिक-क्षयं चैव विदधातीह शङ्करः॥" एवं सर्गो द्विविधो बुद्धि पूर्वोऽबुद्धि-पूर्वश्च। तत्रान्त्यः "अबुद्धि-पूर्वकस्तस्य प्रादुर्भूत-स्तमोमयः। तमो मोहो महामोहस्तामिस्रो ह्यन्ध-संज्ञितः। अविद्या पञ्च-पर्वैषा प्रादुर्भूता महात्मनः॥"[6] इति। आद्यो द्वेधा प्राकृतो वैकृतश्च, तत्राद्यस्त्रिधा— "प्रथमो महतः सर्गस्तन्मात्राख्यो द्वितीयकः। वैकारिकस्तृतीयस्तु सर्गश्चैन्द्रियिकः स्मृतः॥ इत्येष प्राकृतः सर्गः सम्भूतो बुद्धि-पूर्वकः। वैकृतः पञ्चधा मुख्यः सर्गश्चापि चतुर्थकः॥ मुख्यः सर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः। तिर्यक्स्रोतस्ततः प्रोक्तस्तैर्यक्-स्रोतस उच्यते॥ ततोऽर्ध्व-स्रोतसां षष्ठस्ते च देवादयः स्मृताः। अर्वाक्स्रोतो मानवस्तु सप्तमो राजसस्ततः॥ अष्टमोऽनुग्रहः सर्गः सात्त्विक-स्तामसश्च सः। पञ्चैते वैकृताः सर्गाः प्राकृतास्ते त्रयः स्मृताः[7]॥ प्राकृता वैकृताश्चैव तामसो नवमः स्मृतः। इत्येते वै समाख्याता नव सर्गाः प्रजापतेः। प्राकृता वैकृताश्चैव जगतो मूल-हेतवः॥"[8] इति। यच्च प्रलय-रूपम्। उक्ताशयेनै-वादि-सूचितमाह प्राभेति। जन्य-काल-निरूपणम् उपसंहरति तस्मादिति।

वैशेषिकादि-मत-निरासायाह स चेति। सामान्ये ति पूर्व-परयोरुक्त-रीत्याऽभावेऽपि स्रष्टिव्यापीत्यर्थऽयस्ततो(?) जन्यत्वमपि विशेषवत्तस्य सामानस्यापी-

1. C. तस्य चोभय-विधेश्वराख्यान्नित्यात्। 2. Add. r. B. ब्रह्म। 3. v.r. B. तस्मै कस्य। 4. v.r. A. यतिनः। 5. Kurma P., 1. 5. 15 (b), p. 25. 7. op. cit. 1. 6. 1-2; Visnn., 1. 5. 4. 5. 7. ये चैव। 8. Kurma C., 17. 15—18; some lines missing, p.p. 28-29. Vishnu p., 18—24, p.p. 15-16.

"कालं काल-विभक्तिं च नक्षत्राणि ग्रहांस्तथा ।
सृष्टिं ससर्ज चैवेमां स्रष्टुमिच्छन्निमाः प्रजाः[1] ॥"

इति । तत्र यः सामान्य-कालः स विशेषानुगतत्वात् तदपेक्षया नित्यो ग्रह-गत्यादिभिरनुमेयो भूतोत्पत्ति-निमित्त-कारणमिति तार्किक-ज्यौतिषिकादयः प्रतिपेदिरे । तत्र ज्यौतिषा[2] आहुः—

"प्रभव-विरति-मध्य-ज्ञान-वन्ध्या नितान्तं
विदित-परम-तत्त्वा यत्र ते योगिनोऽपि ।
तमहमिह निमित्तं विश्व-जन्मात्ययाना-
मनुमितमभिवन्दे भ-ग्रहैः कालमीशम् ॥
युग-वर्ष-मास-दिवसाः समं प्रवृत्तास्तु चैत्र-शुक्लादेः ।
कालोऽयमनाद्यन्तो ग्रह-भैरनुमीयते क्षेत्रे ॥"

इति । काल-विशेषेषु च संवत्सरः प्रधान-भूतः । अन्ये तु सर्वे गुण-भूताः । तथा चाऽऽरुणकेतुके समाम्नायते—

"नदीव प्रभवात् काचिदक्षय्यात् स्यन्दते यथा ।
तां नद्योऽभिसमायन्ति सोरुः सती न निवर्तते ॥

---

त्याह तस्य चेति । तथाचैतदर्शेषिकोक्तिर्नेति(?)भावः । कालमिति, इमाः प्रजाः स्रष्टुमिच्छन्निमान् कालादीन् ससर्जेत्यर्थः । नन्वेवमपि नाद्यस्योपयोगः ? अत आह तत्रेति, तयोर्मध्ये इत्यर्थः । सामान्यिति सृष्टेराद्य-क्षणमारभ्य प्रलय-पर्यन्तस्थायीत्यर्थः । उत्पत्ति-विनाशयोः श्रुत्यादि-सिद्धत्वेन सृष्टेः पूर्वं प्रलयोत्तरं च सोऽस्तीत्येवं पराभिमतं नित्यत्वं न प्रमाण-सिद्धमिति भावः । प्रागुक्तस्तदाशय-माह विशेषान्विति । तत्र तेषां मध्ये । आद्योक्तेः स्पष्टत्वादाह ज्यौतेति । उत्पत्ति-पूर्वकत्वादनशयोः प्रभवस्य पूर्व-निपातः । श्रीपति-रत्न-मालायां मङ्गलाचरणमिदम् । मध्यः स्थिति-रूपः । नितान्तमित्युभयान्वयि । यत्र विषये । विपरीतान्वयः । इह ग्रन्थादौ । भेति द्वन्द्वः । अनुमेयत्वे प्रमाणान्तर-माह युगेति, यस्येत्यादिः । अग्रे स इति शेषः । क्षेत्रे ब्रह्माण्डे । एवं सति तत्राब्दस्य मुख्यत्वमाह कालेति । उक्त-काले दृष्टान्तमाह नदीवेति । "उदरि"त्यत्र

---

1. see f. n. 4, p. 59. 2. C. ज्यौतिषिकाः, D. ज्यौतिषाः ।

एवं नाना-समुत्थानाः कालाः संवत्सरं श्रिताः।
अणुशश्च महशश्च[1] सर्वे समवयन्ति तम्।
स तैः सर्वैः समाविष्ट उरुः सन्न निवर्तते[2] ॥"

इति। अयमर्थः भागीरथी-गोदावर्यादिका नदीवायं कालः कुतश्चिद् अविनाशात्[3] उत्पत्ति-स्थानादुत्पद्यते। तच्चोत्पत्ति-स्थानं सांख्योक्त-प्रकृतिर्वा शैवागमोक्त-माया वा, श्रुति-स्मृत्युदित-नित्य-कालात्मक ईश्वरो वा भविष्यति। यथा तां गङ्गादिकां नदीमन्या अल्प-नद्यो अभितः प्रविशन्ति। सा च प्रविष्टैर्नद्यन्तरैः सह विस्तीर्णा प्रवहत्प्रवाहा सती न कदाचिच्छुष्यति। एवं नाना-विध-रूपैः समुत्पन्नाः काल-भेदाः संवत्सराख्यं प्रधानं कालमाश्रिताः। तत्र निमेषाद्या अयन-पर्यन्ताः काल-भेदाः संवत्सराद्णवः। युगाद्याः परार्ध-पर्यन्ताः संवत्सरात्महान्तस्ते सर्वे त[4] संवत्सरं सम्यक् प्रविशन्ति। अणूनामवयवत्वेन प्रवेशः, महतां तु संवत्सरावृत्ति-निष्पाद्यानामध्यक्षः संवत्सर इति तत्र प्रवेशोऽभिधीयते। तथा च वेदाङ्गे[5] ज्योतिष-ग्रन्थे पठ्यते—

"पञ्च[6]-संवत्सरमयं युगाध्यक्षं प्रजापतिम्।
दिनर्त्वयन-मासाङ्गं प्रणम्य शिरसा शुचिः[7] ॥"

इति। स च संवत्सरस्तैरणुभिर्महद्भिश्च सर्वैः समाविष्टोऽतिदीर्घः सन्नस्मिञ्जगति नोच्छिद्यत इति। नन्वल्पत्वं निमेषे[8] पर्यवसितम्, महत्त्वं तु परार्धे। तथा च तयोरन्यतरस्य प्राधान्यमुचितम्। तत्र कथं संवत्सरस्य प्राधान्यमिति चेत्, ईश्वरेण प्रथमं सृष्टत्वादिति ब्रूमः। तथा च वाजसनेयिनः समामनन्ति,

---

वैकल्पिकत्वाद् ङीष् न। "काचि"दित्यस्यार्थमाह भागीति। प्रक्रान्तत्वादाह अयमिति "अच्यादि"त्यस्यार्थोऽवीति "प्रभवा"र्थं उत्पत्तीति। "स्यन्दे"रर्थं उत्पत्तिः। आह तच्चोत्पेति। कुतश्चित् इत्यस्य पूर्वमिवसत्त्वाद्यथेत्युत्तरान्वयेत्याह यथेति। "उवं"र्थो वीति। दार्ष्टान्तिके एवमित्यस्य "नोच्छिद्यते" इत्यत्रा-न्वयः। तत्र काल-भेदानां मध्ये। स्वार्थे शसित्याहाणव इति। त-लोपश्छान्दसः। "स"मर्थः सम्यगिति। अध्यक्षः अधिष्ठाता। पञ्चेति समादि-पूर्वः। "उर्वर्थो"ऽतीति।

---

1. C. महत्शश्च। 2. TaitAr. 1. 2. 1. 3. E. no अविनाशात्। 4. तं not found in D. 5. C. वेदाङ्ग। 6. C and I एवं। 7. I. स्थित:। 8. E and L निमेष।

"सोऽकामयत द्वितीयो म आत्मा जायेतेति। स मनसा वाचा मिथुनं समभवत्, तद्यद्रेत आसीत्[1] सं वत्सरोऽभवत्।"

इति। तस्मात् संवत्सरः प्रधानम्। अत एव वयं संवत्सरमारभ्य काल-विशेषं निर्णयामः।

तत्र संवत्सरः अयनम् ऋतुर्मासः[2] पक्षस्तिथिर्नक्षत्रमित्येवंविधाः कर्म-कालाः। यद्यपि पुराणेषु मृत्यु-मार्कण्डेयादीनां युग-कल्पादि-परिमितं वयः स्मर्यते, तथापि शत-संवत्सरायुषो मनुष्यानधिकृत्य धर्म-शास्त्र-प्रवृत्तेर्न युगादि-निर्णयोऽत्र उपयुक्तः। मनुष्याधिकारत्वं चास्माभिः पराशर-स्मृति-व्याख्याने, "मनुष्याणां स्मृतं[3] धर्ममि"त्यस्मिन् वचने प्रपञ्चितम्। ये तु "कलौ पञ्च विवर्जयेदि"त्यादयो मनुष्य-धर्मास्तेष्वपि न युगादिकं निर्णेतव्यम्, संदेहा-भावात्। न च शतायुषामधिकारे कथं सहस्र-संवत्सर-सत्र-श्रुतिरिति शङ्कनीयम्, तत्र संवत्सर-शब्दो[4] दिवस-पर इति षष्ठाध्याय-सप्तम-पादे[5] निर्णीत-त्वात्। ये च संवत्सरावृत्ति-साध्या अनन्त-व्रतादयस्तेष्वपि न[6] संवत्सराधिकः कश्चित् कालो निर्णेतव्योऽस्ति। अतः संवत्सरमारभ्याऽर्वाञ्च एव निर्णेतव्याः कर्माङ्ग-कालाः। न च कालस्य कर्माङ्गत्वे विवदितव्यम्, "सायं जुहोति प्रातर्जुहोती"ति वाक्यादङ्गत्व-प्रतीतेः। तत्र कर्मणस्तावदपूर्व-विषयत्वात् प्राधान्य-मभ्युपगन्तव्यम्। तथा च कालस्य गुणत्वेनान्वयः परिशिष्यते। अत एव गर्गः,

"तिथि-नक्षत्र-वारादि साधनं पुण्य-पापयोः।
प्रधान-गुण-भावेन स्वातन्त्र्येण न ते क्षमाः॥"

---

"न नौ"त्यस्य अर्थो नोच्छ्रोति। [परोद्य (?) परार्धं] संख्यायाः कालान्य-पदार्थेष्व-सम्भवादाह परार्धं इति। तत्र तथा सति। अत एव तस्य प्रधानत्वादेव।

तत्र निर्णेये काल-विशेषे। नक्षत्रमित्युपलक्षणं योगादेरपि। यथासंख्यमाह युगेति। वय इति पाठः। तत्र मानमाह मनुष्येति। शतायुषां तेषामेव। ये च येऽपि। अर्वाञ्चः अधस्तनाः। ननु तत्र कर्मण एव कुतो नाङ्गत्वमत आह तत्रेति, उक्त-वाक्य-प्रतिपाद्ययोर्मध्ये इत्यर्थः। तथा च तस्य प्राधान्ये च। प्रधानेति

---

1. C. तद्यदेतदासीत्। 2. C. मासाः। 3. C and D. हितं। 4. C. सहस्र-शब्दो...। 5. MimamsaD., 6. 7. 13. 31—42. 6. न not found in C.

इति। तस्मादङ्ग-भूतेषु निर्णेयेषु[1] कालेष्ववयवित्वेन संवत्सरस्याभ्यर्हितत्वादल्प-वक्तव्यतया सूची-कटाह-न्यायानुसाराच्च स एवादौ निर्णीयत इति स्थितम् ॥

इति माधवीये प्रकरणे उपोद्घात-प्रकरणम् ॥१॥

---

पूर्वान्वयि। प्रकरणार्थमुपसंहरन् वक्ष्यमाणं प्रतिजानीते तस्मादिति। निर्णेयेष्विति पाठः।

इत्युपोद्घात-प्रकरणम्।




---

1. C. निर्णेय।

# कालमाधव-कारिका-विवरणम्*

उपोद्घात इति। प्रथमे वादे[1] सांख्य-मतमाश्रित्य काल शब्द-वाच्यः कश्चित् पदार्थो[2] नास्तीति पूर्वपक्षीकृत्य वैशेषिकादि-मतमाश्रित्य तत्-सत्त्वं साधितम्[3]। द्वितीये[4] तस्य कालस्य ज्योतिः-शास्त्र-प्रसिद्धत्वा[5]दनिर्णेयत्वमाशङ्क्य कर्माङ्गत्वाकारेण तत्प्रसिद्धत्वाभावान्निर्णेयत्वं[6] दर्शितम्। तृतीये कर्मणामुपक्रमोपसंहारयोश्चिन्तनीयत्वेन नित्य-कालस्य कर्माङ्गत्वं दर्शितम् ॥८॥[7]

चतुर्थे जन्यस्य[8] कालस्य स्वरूपतया संवत्सरो मुख्यः, निमेषाद्या मन्वन्तराद्याश्च संवत्सराश्रयत्वादुपसर्जनभूता[9] इत्युक्तम्। द्वितीय-प्रकरण-प्रतिपाद्यं पञ्चविधम्[10] अनुक्रामति[11]—अब्देति ॥१०॥

तेषु संवत्सरस्यावान्तर-विभागं तद्विनियोगञ्च दर्शयति—अब्दः पञ्चविध इति[12]। चान्द्रः सौरः सावनो नाक्षत्रो बार्हस्पत्यश्चेत्येवं पञ्च-विधः[13] संवत्सरः। तिलक-व्रतं भविष्य-पुराणे पठितम्। तिलकादीत्यादि-शब्देनानन्त-व्रतं[14] विवक्षितम्[15]। व्रतादावित्यादि-शब्देन निरूढ-पशु-बन्धः। सुजन्मावाप्ति-व्रतं

---

*MS. F has one additional verse at the very beginning which seems to have been composed by the scribe. This verse is not found in the other MSS. of the काल-माधव-श्लोक-विवरण। The verse is as follows :—

स्वीय-श्लोक-विवरणं माधवाचार्य-निर्मितम्।
किंवदन्तीमिति श्रुत्वा लिख्यते बाल-तुष्टये ॥

1. v.r. M. पादे। 2. v.r. M and R. कश्चिदर्थो। 3. v.r. U. तत्-सद्भावः साधितः। 4. add. r. R. तु। 5. v.r. U. ज्योतिः-शास्त्रादि-सिद्धत्वा०। 6. v.r. M तत्-प्रसिद्ध्यभावान्निर्णेयत्वं ; R. तत्-प्रसिद्धेरभावान्निर्णेयत्वं। U. तत्-प्रसिद्ध्यभावात् निर्णेयत्वं।

7. This and the following numbers of verses have been inserted by me.

8. v.r. M and R. जन्य०। 9. v.r. R. ०सर्जनीभूता।

10. v.r. R. पञ्चविध-वत्सरत्वम् ; U. पञ्चविधत्वम्। 11. M. उपक्रामति।

12. v.r. M शब्द इति। पञ्चविधः। 13. v.r. F. R and U. पञ्चविध—।

14. U. ०व्रतादिकं। 15. v.r. M. दर्शितम्।

विष्णुधर्मोत्तरे[1] दर्शितम्[2]। भुजङ्गादीत्यादि-शब्देन ग्राह्यं[3] व्रत-काण्डे[4] द्रष्टव्यम्। गो-सत्रं "गावो वा एतत् सत्रमासत"इत्यादि ब्राह्मणे समाम्नातम्[5]। गो-सत्रादीत्यादि-शब्देनाहणकेतुकचयनाङ्गं त्रिषवण-स्नानादिकं[6] गृह्यते ॥११॥

मासवो ज्योतिःशास्त्र उपयुज्यते। अधिक-मासवदधिवत्सरस्य देव-प्रतिष्ठादौ[7] वर्जनीयतया तत्[8]-संवत्सर-निर्णये बार्हस्पत्य उपयुक्तः[9] ॥१२॥

चान्द्र-संवत्सरस्यावान्तर-विभागं[10] तद्विनियोगञ्चाह चान्द्राणामिति। प्रभवः संवत्सरः, विभवः परि-वत्सरः, शुक्लः इदा-वत्सरः, प्रमोदोऽनु-वत्सरः, प्रजापतिरिद्-वत्सरः। तदेतत् पञ्चकं[11] युगम् ॥१३॥

तत्र क्रमेण तिलादिकं[12] देयम्। धान्य-शब्देन तिल-व्यतिरिक्त-व्रीह्यादि विवक्षितम्। अयनस्य विभागेन विनियोगमाह उग्र इति। माट-भैरवादुग्र-देवता-प्रतिष्ठायां दक्षिणायनं ग्राह्यम्, शिव-विनायकादावुत्तरायणं[13] ग्राह्यम् ॥१४॥

ऋतूनां विभागेन विनियोगमाह[14] वसन्तादीति। चैत्र-वैशाख-मासौ चान्द्रो[15] वसन्तर्तुः, मीन-मेष-मासौ मेष-वृष[16]-मासौ वा सौरः। एवं ग्रीष्मादिषु द्रष्टव्यम् ॥१५॥

---

1. v.r. R. विष्णुधर्मे। 2. v.r. M. पठितम्। 3. v.r. M. आदि-शब्द-ग्राह्यं।

4. See the व्रत-काण्ड of हेमाद्रि's CaturVC, pp. 728—743, संक्रान्ति-व्रत as given in the देवी-पुराण, धान्य-संक्रान्ति-व्रत as given in the स्कन्द-पुराण, लवण-संक्रान्ति-व्रत as given in the स्कन्द-पुराण, भोग-संक्रान्ति-व्रत as given in the स्कन्द-पुराण, etc.

5. Add.r. M. R. आदि-शब्देनोत्सर्गिणामयनं गृह्यते। विद्यातीर्थ-नामानमाचार्यं प्रसादयितु-माधवैर्विबुधैः संवत्सरे सैवा समाम्नाता।

6. v.r. U. त्रिषवण-स्नानादि-व्रतं। 7. v.r. M and R. देवता-प्रतिष्ठादौ।

8. v.r. M. तत् omitted. 9. v.r. M. उक्तः।

10. v.r. M. भेदं। add.r. U. युग-देवाः क्रमेणैते विष्णु-त्वष्ट्रिन्द्र-वह्नयः। इन्द्र-वह्नी ततः प्रोक्ताविन्द्राग्नी तदनन्तरम्। अश्विनौ भग-देवत्यौ द्वादशैते ॠता बुधैः॥ एतेषां देवता वह्निरर्केन्दु-ब्रह्म-सोमकाः। वत्सरादौ सदा पूज्या युग-वत्सर-देवताः॥ हेमतौ (?) पुस्तके वा प्रातः संपूज्य भक्तितः। यस्मिन् वारे मधौ शुक्लाऽपराह्णे प्रतिपद् भवेत्॥ सोऽब्दपो मेष-संक्रान्तौ मन्त्री कर्के च सस्यपः। अब्दपौ यत्नतः पूज्यौ दानं दद्याद् यथाविधि। संवत्र-क्रमेणैव द्विजानभ्यर्च्य तोषयेत्।

11. v.r. M and R. पञ्चकमेकं। 12. v.r. M. तिलादि।

13. v.r. F. °दिषूत्तरायणं। 14. v.r. U. विभागं विनियोगञ्चाह।

15. v.r. R. चैत्र-वैशाखौ चान्द्रौ। 16. v.r. M. मेष-वृषभ—।

[ आधानादि ] "वसन्ते ब्राह्मणोऽग्नीनादधीते"त्यादि प्रसिद्धम्। वसन्तादिषु क्रमेण षण्णां देवता-मूर्तीनां पूजा विष्णुधर्मोत्तरे दर्शिता। मासानां विभागं विनियोगञ्चाह **मासास्त्विति**। स्पष्टोऽर्थः ॥१६-१७॥

चान्द्र-मासे कञ्चिद् विशेषमाह **चान्द्र** इति। संक्रान्ति-रहितश्चान्द्रो मासः संवत्सरावयवेभ्यः संक्रान्ति-युतेभ्यश्चैत्रादि-द्वादश-मासेभ्योऽतिरिक्तत्वादधिक इत्युच्यते, स च संक्रान्ति-युक्तोत्तर-मासान्तर्भावात्[1] तन्नाम्ना व्यवहर्तव्यः ॥१८॥

यदैकस्मिन् वर्षे[2] द्वावसंक्रान्ति-मासौ स्यातां तदा तयोर्मध्य उत्तर एवाधिमासः[3], पूर्वस्तु संक्रान्ति-रहितोऽपि नाधिमासः, किन्तु संसर्प इत्युच्यते। यदा द्वि-संक्रान्ति-युतो मासः कदाचित् स्यात् तदाऽसौ क्षय-मास इति अंहस्पतिरिति च[4] शास्त्रेषु व्यवह्रियते ॥१९॥

संसर्पोंऽहस्पतिरधिमास इत्येते त्रयोऽपि ज्योतिः-शास्त्र-निरूपिते विवाहादौ वर्जनीयाः। श्रौत-स्मार्त-कर्मसु[5] संसर्पः शुद्धः तथैवांहस्पतिरपि। अधिमासे तु श्रौत-स्मार्त-विषयस्य[6] विवेचनीयस्य बहुलत्वात्तद्विवेकः पृथक् प्रतिज्ञायते ॥२०॥

तत्र वर्ज्यं विविनक्ति **काम्यारम्भमिति**। अनन्त-व्रत-लक्ष्मी-व्रतादिकं काम्यम्। क्वचित्तु[7] काम्यस्यापि समाप्तिमङ्गीकरोति **आरब्धमिति**। द्वादश-दिन-साध्यं प्राजापत्यं कृच्छ्रं, त्रिंशद्दिन-साध्यं चान्द्रायणम्, तथा त्रयोदश-रात्रादीनां सत्राणां द्विरात्रादीनामहीनानाञ्च[8] शास्त्रोक्ता दिवस-संख्या, तस्याश्चोल्लङ्घयितुम्[9] अशक्यत्वात् कृच्छ्रादि-समाप्तिरावश्यकी[10] ॥२१॥

आरम्भ-समाप्तिवदनुष्ठानमपि न[11] वर्जनीयमित्याह[12] **आरम्भस्ये**ति। अत एव[13] शिष्टाः श्रावणादिष्वधिक-मासेष्वपि चातुर्मास्य-व्रतान्यनुतिष्ठन्ति ॥२२॥

---

1. v.r. M. R. ०मासान्तर्भावित्वात्। 2. v.r. U. यदा त्वेकस्मिन् वत्सरे।
3. v.r. F. ०मध्ये उत्तरोऽधिमासः ; R. ०मध्ये य उत्तरः स एवाधिमासः।
4. v.r. F. तु। 5. v.r. M. श्रौत-स्मार्तेषु।
6. v.r. R श्रौत-स्मार्तस्य ; U, no तु before श्रौत०।
7. v.r. 'तु' not found in R. 8. v.r. F. आवश्यकानाञ्च ; U. आवश्यकानां।
9. U. शास्त्रोक्त-दिवस-संख्यायोल्लङ्घयितुम्...... । 10. v.r. U. अवश्यं भाविनी।
11. v.r. F and M. no 'न'। 12. v.r. M. इत्याशङ्क्याह।
13. v.r. M. no 'एव'। v.r. U. विशिष्टाः after this.

यथा विषय[1]-विशेषेण मल-मासे समाप्तिरनुष्ठानं चाभ्युपेयते तथारम्भोऽपि क्वचिदभ्युपेय इत्याह **कारीर्यादि** ष्विति। "कारीर्या वृष्टि-कामो यजेत"ति कारीरी विहिता। आदि-शब्देन ग्रह-ग्रस्तं चिकित्सितुं विहिता रक्षोघ्नेष्टिर्गृह्यते, तत्र यदि मल-मासमपनेतुं काल-विलम्बः प्रतीक्ष्येत[2] तदा सस्यानि शुष्येयुः, ग्रह-ग्रस्तश्च म्रियेत[3] ॥ २३ ॥

काम्य-कर्मस्विव नित्य-कर्मस्वपि वर्ज्यावर्ज्य-विभागं दर्शयति—**अनन्ये**ति। प्रतिदिनं सायं-प्रातः-कालयोर्विहितस्याग्नि-होत्रस्याकरणे प्रत्यवायादनन्य-गतिकत्वम्। 'आदि-शब्देन दर्श-पूर्णमासौ गृह्येते। सोम-यागस्य तु वसन्ततौ विहितस्य शुद्ध-मासेऽपि कर्तुं शक्यत्वाद् गत्यन्तरं युक्तम्[4]। आदि-शब्देन शुद्ध-मासेऽपि कर्तुं शक्यो निरूढ-पशु-बन्धो गृह्यते ॥२४॥

नित्य-कर्म-न्यायं नैमित्तिकेऽप्यतिदिशति **अगती**ति। मल-मासे प्राप्तस्य ग्रहण-स्नानस्य शुद्ध-मासे सम्पादयितुमशक्यत्वादगतिकत्वम्। "वैश्वानरं द्वादश-कपालं निर्वपेत् पुत्रे जाते" इति विहिता जातेष्टिस्तस्याश्च[5] शुद्ध-मासे कर्तुं शक्यत्वात् सगतिकत्वम् ॥२५॥

प्रत्याब्दिकस्य तु मरण-काल-विशेषमुपजीव्य वर्ज्यावर्ज्य[6]-व्यवस्थां दर्शयति **शुद्धे**ति। मल-मास-रहिते संवत्सरे वैशाख-मृतस्य यद्युपरितने संवत्सरे[7] अधिक-वैशाखे प्रथमाब्दिकं प्राप्नुयात् तदा कर्तव्यमेव। अधिक-वैशाख-मृतस्य तु प्रथमं प्रत्याब्दिकं[8] सर्वथा नाधिक-मासे प्राप्नोति, किन्तु[9] प्रत्याब्दिकान्तरं[10] यदा कदाचिदधिक-मासे प्राप्नोति तदा कर्तव्यम्, उभयोरपि[11] शुद्ध-मासे प्रत्याब्दिकं कार्यम्। मास-विषये कर्तव्यं परिसमाप्य पक्षयोर्विशेषमाह[12] **दैव** इति। स्पष्टोऽर्थः ॥२६॥

इति द्वितीय-प्रकरणम्[13]।

---

1. v.r. U. मलमास०। 2. v.r. R. प्रतीक्ष्यते ; U. मल-मास-विलम्बं प्रतीक्षेत।
3. v.r. F. ग्रह-ग्रस्तश्चावसिष्येत।
4. v.r. R. गत्यन्तरत्वम् ; U. this sentence omitted.
5. v.r. R. no 'च'। 6. v.r. R. no 'वर्ज्यावर्ज्य'। 7. v.r. R. no 'संवत्सरे'।
8. v.r. M. U. प्रथमाब्दिकं। 9. v.r. M and R. no 'किन्तु' ; U. आब्दिकान्तरं।
10. add.r. M and R. तु। 11. add.r. M. नं।
12. v.r. F विनियोगमाह। 13. v.r. M and R. no इति···प्रकरणम्।

प्रकरणान्तर-प्रतिपाद्यमर्थं संटङ्कति तृतीये त्विति। प्राथम्य-वाचि-प्रतिपच्छब्द'[1] तिथि-विशेषे वर्तयितुं प्रवृत्ति-निमित्त-विशेषमाह प्रतिपद्दिति ॥२७॥

विद्धाया एव[2] तिथेर्निर्णेयत्वं[3] दर्शयितुं तिथिं विभजते शुद्धेति। सूर्योदयमारभ्य सूर्यास्त[4]-पर्यन्तः कालोऽहरित्युच्यते। तस्मिन्नहनि पूर्वया तिथ्या अमावास्या-संज्ञया उत्तरया च द्वितीया-संज्ञया तिथ्या हीना प्रतिपच्छुद्धा इत्युच्यते। कदाचित्[5] सूर्योदयादूर्ध्वं त्रि-मुहूर्तया अमावास्यया संयुता भवति, कदाचित् सूर्यास्तमयादर्वाक् त्रि-मुहूर्तया द्वितीयया संयुज्यते। तादृशी द्विविधापि प्रतिपद्[6] विद्धेत्युच्यते। मुहूर्त-त्रितय-न्यूना अमावास्या द्वितीया वा प्रतिपदं वेद्धुं न शक्नोति। यथा वेधिकयोरमावास्या[7]-द्वितीययोस्त्रिमुहूर्तत्व-नियमस्तथा वेध्यायाः प्रतिपदोऽपि त्रि-मुहूर्तत्वं नियतमित्याह वेध्यापीति। अस्तमयादर्वाग् मुहूर्त-त्रय-संयुता प्रतिपद् अमावास्यया वेद्धुं योग्या, उदयादूर्ध्वं त्रि-मुहूर्ता प्रतिपद् द्वितीयया वेद्धुं योग्या, मुहूर्त-त्रय[8]-रहिता तु पूर्वया परया वा तिथ्या वेद्धुं योग्या न भवति ॥२८-२९॥

यथोक्तयोः शुद्धा-विद्धयोर्मध्ये शुद्धाया निर्णेयत्वं वारयति शुद्धायामिति। एवं सति दैव-पित्र्य-विषये विद्धाया एव निर्णेयत्वं परिशिष्यते। तत्र वक्ष्यमाण-निर्णये बुद्धि-समाधानाय दैवं पित्र्यं विभज्यानुक्रामति उपवासश्चेति[9] ॥३०-३१॥

तत्रोपवासे[10] प्रतिपदो[11] निर्णयमाह शुक्ल-पक्ष[12] इति। शुक्ल-पक्षे प्रतिपदोऽमावास्या-विद्धायाः सायाह्न-व्यापित्वमवश्यंभावि। सा यदि सायाह्नादर्वागपराह्णेऽपि कियती विध्येत[13], तदा प्रशस्ता भवति ॥३२॥

---

1. v.r. M. प्राथम्य-वाचिन' प्र—; U. प्राथम्य-वाचित्व' प्रतिपच्छब्दस्य।
2. v.r. M. विद्धायामेव। 3. v.r. M. तिथौ निर्णेयत्व'।
4. v.r. M. सूर्यास्तमय०। 5. v.r. कदाचित्; omitted in U.
6. v.r. M. no 'प्रतिपद्'। 7. v.r. U. वेधितयोरमावास्या०।
8. v.r. M. मुहूर्त-त्रितय०। 9. v.r. R. no उपवासश्चेति।
10. v.r. R. no 'तत्र'। 11. v.r. R and M. no 'प्रतिपदो'।
12. The reading in our Text; शुक्ले पक्षे। 13. v.r. M. विद्यते।

तत्र सायाह्नापराह्णयोर्विवक्षितमर्थ-विशेषमवगमयितुं[1] स्वाभिमतमह्नो विभागमाह प्रातरिति ॥३३॥

पूर्वाह्णोऽपराह्णश्चेति द्वावेवाह्नो विभागावित्येके[2]। प्रातर्मध्याह्न-सायाह्न-रूपास्त्रयो भागा इत्यपरे। प्रातर्मध्याह्नापराह्ण-सायाह्नाश्चत्वार[3] इत्यन्ये। मुहूर्त-भेदेन पञ्चदशेति केचित्। [4]एते चत्वारः पक्षाः श्रौत-स्मार्त-कर्मानुष्ठान-विषया न भवन्ति। तस्मात् प्रातः-सङ्गव-मध्याह्नापराह्ण-सायाह्नैः पञ्चधा विभागोऽनुष्ठाने मुख्यः। अमावास्या-विद्धायां प्रतिपद्युपवासे संकल्पस्य कालमाह अभावेऽपीति ॥३४॥

पूर्व-विद्धायामुपोषितस्य परेद्युः पारण-व्यवस्थामाह तिथिरिति। यदा प्रतिपत् तिथिः प्रहर-त्रयादर्वागेव समाप्यते तदा तिथ्यन्ते पारणम्, याम-त्रया-दूर्ध्वमनुवृत्तौ तु प्रातरेव पारणमिति व्यवस्था ॥३५॥

[5]शुक्ल-प्रतिपदि विहितमुपवासे तिथि-निर्णयं[5] वत्स्युत्सवेऽप्यतिदिशति वत्स्युत्सवश्चेति। अपराह्ण-संयुता तिथि[6]र्मुख्या, तदभावे सायाह्न-व्यापिनी ग्राह्येत्यर्थः। शुक्ल-प्रतिपद्युपवासस्यानुकल्पमाह—मुख्येति। यद्यपि पूर्व-विद्धायामुपवासो मुख्यस्तथापि केनचिन्निमित्तेनान्तराये[7] सति व्रत-परित्यागाद्वरं परेद्युरुपवास इत्यर्थः ॥३६॥

शुक्ल-पक्षे पूर्व-विद्धा प्रतिपदुपोष्येति निर्णीते सत्यर्थात् कृष्ण-पक्षे परेद्युरुपवास इति निर्णयः[8] पर्यवस्यति। तस्य क्वचिदपवादमाह शुद्धाधिक्येति। यदा पूर्वेद्युः सूर्योदयमारभ्य परेद्युः सूर्योदयादूर्ध्वं वृद्धि-वशान्मुहूर्त-त्रयं प्रतिपद् विद्यते, तदा कृष्ण-पक्षत्वेन परेद्युः प्राप्तावपि तदपोह्य पूर्वेद्युरुपवासः कर्तव्यः। इत्युपवासे[9] प्रतिपत् निर्णीता। अथैकभक्ते निर्णयमाह ग्रहीतव्येति ॥३७॥

---

1. v.r. M. विवक्षितं भेदं दर्शयितुं। 2. v.r. M. भागाबित्येके।
3. add.r. M. भागाः। 4. add.r. M. U. ते before एते।
5—5. v.r. in M and R, उपवासे विहितं तिथि-निर्णयं शुक्ल-प्रतिपदि विहिते।
6. v.r. R. no 'तिथिः'। 7. add.r. R. अपि।
8. v.r. R. U. no 'इति निर्णयः'। 9. v.r. M. no 'उपवासे'।

मध्याह्न-व्याप्तेरवान्तर-भेदानुपजीव्य व्यवस्थामाह **परेद्युरेवेति**। मध्याह्नं कृत्स्नं व्याप्नोतीति प्रथमः पक्षः, मध्याह्नं कृत्स्नं न स्पृशतीति द्वितीयः,[1] मध्याह्नैक-देशं व्याप्नोतीति तृतीयः[2]। तत्र कृत्स्न-व्याप्तिस्त्रिधा भिद्यते—परेद्युः[3] कृत्स्नं व्याप्नोति, पूर्वेद्युः[4] कृत्स्नं व्याप्नोति, उभयत्र कृत्स्नं व्याप्नोतीति[5]। एक-देश-व्याप्तिश्च द्विधा भिद्यते—सम-व्याप्तिर्विषम[6]-व्याप्तिश्चेति। पूर्वेद्युरेव[7] मध्याह्नस्यापर-भागं व्याप्नोति, परेद्युरेव[8] मध्याह्नस्य पूर्व-भागं व्याप्नोतीति सम-व्याप्तिरपि द्विधा[9]। तयोर्भागयोर्न्यूनातिरेक-व्याप्तौ विषम-व्याप्तिरित्युच्यते। तत्र कृत्स्न-व्याप्ति-पक्षास्त्रयः असंस्पर्श-पक्षश्चतुर्थः, अंश-व्याप्ति-पक्षौ द्वावित्येवं[10] षट् पक्षाः सम्पद्यन्ते। तत्र परेद्युरेव कृत्स्न-व्याप्तिरिति प्रथमे[11] पक्षे पर-तिथिरेव ग्राह्या। पूर्वेद्युरेव कृत्स्न-व्याप्तिरित्यस्मिन् द्वितीये पक्षे, दिन-द्वयेऽपि कृत्स्न-व्याप्तिरित्यस्मिंस्तृतीये पक्षे, दिन-द्वयेऽपि स्पर्शो[12] नास्तीत्यस्मिंश्चतुर्थे पक्षे, दिन-द्वये सम-व्याप्तिरित्यस्मिन् पञ्चमे पक्षे पूर्वा तिथिरेव ग्राह्या। दिन द्वये विषम-व्याप्तिरित्यस्मिन् षष्ठे पक्षे त्वधिक-व्याप्ति-सत्ता[13] ग्राह्या ॥३८॥

त्रिविधं ह्येक-भक्तम्, स्वतन्त्र-व्रत-रूपं प्रथमम्, अन्यस्य व्रतस्याङ्ग-भूतं द्वितीयम्, उपवास-प्रतिनिधीभूतं तृतीयम्। तेषु प्रथमे[14] पक्षे तिथि[15]-निर्णयोऽभिहितः[16]। इदानीं द्वितीय-तृतीय-पक्षयो[17]स्तिथि-निर्णयमाह **अन्याङ्गस्येति**। स्वतन्त्रैकभक्तस्य मध्याह्नो मुख्यः कालः, अतस्तद्व्याप्तिमुपजीव्य तिथिर्निर्णीता। अन्याङ्गस्य त्वेक-भक्तस्य पराधीनतया नास्ति स्वतन्त्रः[18] कर्म-कालस्तिथि-विशेषो वा। अतः प्रधान-भूत-व्रतानुसारेण कर्मकाल-तिथि-विशेषौ ग्रहीतव्यौ। उपवास-प्रतिनिधेस्त्वेकभक्तस्योपवासे या तिथिर्निर्णीता सैव ग्रहीतव्या[19] ॥३९-४१॥

---

1. Add.r. R. and M. पक्षः। 2. Add.r. R and M. पक्षः।
3. v.r. R. अपरेद्युः। 4. add.r. M and R. एव।
5. v.r. M and R. no 'इति'। 6. v.r. F. वैषम्य०। 7. v.r. F. no 'एव'।
8. v.r. F. no 'एव'। 9. v.r. F and M. no 'अपि द्विधा'। 10. v.r. R. ०तेऽत्र।
11. v.r. R. आदि०; M. आद्य०। 12. v.r. M. कृत्स्न-व्याप्तिः।
13. v.r. R. and U. ०युता। 14. v.r. R and M. प्रथम०।
15. v.r. R. no 'तिथि'। 16. v.r. M. विहितः। 17. v.r. M. no 'पक्ष'।
18. v.r. M. no 'स्वतन्त्रः'। 19. v.r. R and M. ग्राह्या।

एकभक्त-न्यायेन नक्तेऽपि षट् पक्षानभिप्रेत्य तत्रोचितं[1] निर्णयमाह **प्रदोषेति**। नक्त-व्रते प्रदोष-व्यापिनी तिथि[2]र्ग्राह्येत्युक्तम्। पूर्वेद्युरेव व्याप्तिः परेद्युरेव व्याप्तिरिति पक्ष-द्वयेऽपि[3] निर्णयो दर्शितः, अवशिष्टेषु चतुर्षु पक्षेषु[4] पर-तिथिरेव ग्राह्या ॥४२॥

क्वचित् प्रदोष-व्याप्तेरपवादमाह **सौरेति**। उपवास-तिथि-निर्णयमयाचितेऽप्यतिदिशति[5]—**अयाचिते त्विति** ॥४३॥

दान-व्रतयोस्तिथि-निर्णयमाह **सोदयेति**। या तिथिः पूर्वेद्युरुदयमारभ्य प्रवृत्ता सती वृद्धि-वशात् परेद्युरुदयादूर्ध्वं विद्यमानाऽपि मुहूर्त-त्रयं न व्याप्नोति, सा तिथिः पूर्वैव ग्राह्या। दिन-द्वये सोदय-त्रि-मुहूर्त[6]-व्याप्तावपि पूर्वेद्युर्ग्राह्या। यदा तु पूर्वेद्युः सोदय-मुहूर्त-त्रयमस्पृष्ट्वा परेद्युरेव सोदय-मुहूर्त-त्रयं व्याप्नोति तदा ग्राह्य-तिथेर्वृद्धि-साम्य-क्षयान् परीक्ष्य निर्णेतव्यम्[7]। तत्र क्षये सति[8] पूर्व-विद्धा स्वीकार्या, वृद्धि-साम्ययोस्तु पर[9]-विद्धा। दिन-द्वये सोदय-त्रि-मुहूर्त-स्पर्शाभावः, एक-देश-सम[10]-विषम-व्याप्तिरित्येतेषु त्रिषु पक्षेषु पूर्व-विद्धैव ग्राह्या ॥४४-४५॥

उपवासादौ षड्विध-दैव-तिथिं निर्णीय पित्र्ययोर्द्वयोरेकोद्दिष्टे निर्णयमाह **एकोद्दिष्टे त्विति**। अत्रापि पूर्ववत्[11] षट् पक्षान् विविच्य दिन-द्वयेऽप्यंशे सम-व्याप्तिरित्येनं पञ्चमं पक्षं परिहृत्यावशिष्टेषु पक्षेष्वेकभक्त-न्यायेन तिथि-र्निर्णेतव्या। पञ्चमे तु पक्षे ग्राह्य-तिथेर्वृद्धि-साम्य-क्षये निर्णयः ॥४६॥

अथ[12] प्रत्याब्दिके निर्णयमाह—**कुतुपादीति**[13]। अह्नोऽष्टमो मुहूर्तः

---

1. v.r. F and R. अत्रोचितं। 2. v.r. F and R. no 'तिथिः'।
3. v.r. F and R. no 'अपि'। 4. v.r. F and R. प्रदोषेषु।
5. v.r. F and R. अयाचितेऽपि दर्शयति। 6. v.r. M. ०मुहूर्त-त्रय०।
7. v.r. M. निर्णेयं; U. ०क्षयाः परीक्षणीयाः।
8. v.r. R. no सति। 9. v.r. R. उत्तर०।
10. v.r. M and R. सम-व्याप्ति०।
11. v.r. R. no 'पूर्ववत्'। 12. v.r. R. अत्र।
13. Here लक्ष्मी-देवी in her commentary on 47, p. 18, ll. 23-24, says that the view that this verse refers to प्रत्याब्दिक is wrong. She thinks that

कुतुपः, द्वादशेन मुहूर्तेनापराह्णः समाप्यते। तथा सति कुतुपादि-मुहूर्त-पञ्चक-[1] व्यापिनी तिथिः प्रत्याब्दिके प्रशस्ता, तदसम्भवे[2] त्वपराह्ण-व्याप्तिमुपजीव्य[3] षट् पक्षा विवेचनीयाः ॥४७॥

तत्र पूर्वेद्युरेव व्याप्तिरुत्तरेद्युरेव[4] व्याप्तिरित्यनयोः पक्षयोर्निर्णयः स्पष्टः। उभयत्र व्याप्तिरित्यस्मिंस्तृतीये पक्षे ग्राह्य-तिथेरूर्ध्व-तिथि-गता वृद्धि-साम्य-क्षयाः परीक्षणीयाः[5] ॥४८॥

तत्र क्षये सति ग्राह्य-तिथिः पूर्व-विद्धा[6] ग्राह्या, वृद्धि-साम्ययोस्तु पर-विद्धा[7]। यदा दिन-द्वयेऽप्यपराह्ण-स्पर्शो नास्ति तदा यद्यपि परेद्युः कुतुप-व्याप्तिः स्यात्तथापि[8] तत् परित्यज्य[9] पूर्व-विद्धैव ग्राह्या ॥४९॥

अपराह्णस्यैक-देशे[10] वैषम्येण व्याप्तिरित्यस्मिन् षष्ठे पक्षे महत्त्वं निर्णय-हेतुः। साम्येनैक-देश-व्याप्तिरित्येतस्मिन् पञ्चमे पक्षे तु ग्राह्य-तिथि-गतान् वृद्धि-साम्य-क्षयान् परीक्ष्य क्षये पूर्वा वृद्धि-साम्ययोस्तूत्तरेति निर्णयः। प्रकरणान्तर-प्रतिपाद्यमर्थं संगृह्णाति **द्वितीयाद्यास्त्विति** ॥५०-५१॥

यथोक्तं दैव-पित्र्य-विषयं निर्णयं[11] द्वितीयादिष्वतिदिशति **सञ्चारणीय** इति। सामान्य-न्यायस्यापवादं विवक्षुः प्रतिजानीते **क्वचिदिति** ॥५२॥

---

the verse refers to पार्वण ( अथ पार्वणे तन्निर्णयमाह कुतपेति। एतेन अथ प्रत्याब्दिके निर्णयमाह—"कुतपादीती"ति परास्तम् )। Probably, she refutes the view of this commentary.

Whether the commentary विवरण is composed by माधव is a different matter. The fact that it is attributed to him also confirms that the commentary is an old one, in any case, older than that of लक्ष्मी-देवी।

वैद्यनाथ, however, agrees with लक्ष्मी-देवी and says that the verse refers to पार्वण, and not प्रत्याब्दिक।

1. v.r. M. ०पञ्च-मुहूर्त०।
2. v.r. M. ०तदभावे। 3. v.r. R. ०व्यापिनीमुपजीव्य।
4. v.r. F and R. पूर्वेद्युरेव परेद्युः; M. पूर्वेद्युः परेद्युरेव।
5. F and R. no 'परीक्षणीयाः'। 6. add.r. M. एव।
7. add.r. M. एव। 8. v.r. R. no 'स्यात्'। 9. v.r. F. R. त्याज्या।
10. v.r. F. U. एक-देशस्य। 11. v.r. F and R. no 'निर्णय'।

प्रतिज्ञातं विषयं[1] दर्शयति पूर्वे द्युरिति। यदा[2] द्वितीया पूर्वे द्युः मुहूर्त-त्रयात्मक-प्रातः-कालं न स्पृशति, परेद्युस्त्रि-मुहूर्तात्मकं[3] प्रातः-कालं व्याप्नोति,[4] तदा पर-विद्धोपोष्या, अन्यथा पूर्व-विद्धा ॥५३॥

तृतीयायां विशेषमाह रम्भा-तृतीयेति। यद्यपि रम्भा-व्यतिरिक्त-व्रतेषु पूर्व-विद्धा निषिद्धा, तथापि परेद्युस्तृतीयाया अभावे पूर्व-विद्धा ग्राह्या। यद्यपि मुहूर्त-त्रयमन्तरेण तिथिग्राह्यत्वं नास्ति, तथापि गौरी-व्रते[5] मुहूर्त-मात्रवर्तिन्यपि पर-तिथिर्ग्राह्या[6]। शुद्धाधिकायां तु[7] यद्यपि पूर्व-तिथिः संपूर्णा तथापि गौरी-व्रते पर-विद्धैव ग्राह्या ॥५४-५५॥

चतुर्थ्यां विशेषमाह चतुर्थी त्विति। विनायक-व्रत-नाग-व्रताभ्यां व्यतिरिक्तेषु व्रतेषु चतुर्थी पर-विद्धैवोपोष्या। उभयोस्तु व्रतयोर्मध्याह्न-व्याप्त्या निर्णयः। तत्र षट् पक्षान् विविच्य परेद्युरेव[8] व्याप्तिरित्यस्मिन् पक्षे विनायक-व्रतं पर-दिने कार्यम्, इतरेषु पञ्चसु[9] पक्षेषु पूर्व-दिने कार्यम्। पूर्वेद्युरेव मध्याह्न-व्याप्तिरित्यस्मिन् पक्षे नाग-व्रतं पूर्व-दिने कार्यं, पक्षान्तरेषु पर-दिन इति विवेकः। [10]गौरी-व्रतेषु मध्याह्न-सत्त्वेऽपि शुद्ध-तृतीया-युतैव ग्राह्या[10]। पञ्चम्या विशेषमाह सर्वत्रेति ॥५६-५८॥

षष्ठ्या[11] विशेषमाह नाग-विद्धेति। स्कन्द-व्रते षष्ठी पूर्व-विद्धा ग्राह्या, व्रतान्तरेष्वपि पर-दिने षष्ठ्या अलाभे पूर्व-विद्धापि गृह्यतामिति[12] ॥६०॥

सप्तमी-निर्णयमाह[13] सप्तमीति। निगद-व्याख्यानमेतत्[14] ॥६१॥

---

1. v.r. M. U. विशेषं। 2. v.r. R. या।

3. v.r. F and M. no 'त्रि-मुहूर्तात्मक'। 4. v.r. R. स्पृशति।

5. add.r. R. तिथिः पर-विद्धा। 6. v.r. R. no 'पर-तिथिः'।

7. v.r. F. no 'तु'। 8. add.r. R. तद्द। 9. v.r. M. पञ्चस्वपि।

10-10. v.r. not found in M. U and R. गौरी...ग्राह्या। 11. v.r. M. षष्ठ्यां।

12. v.r. R. no 'इति'; U. अभावे पूर्व-विद्धा ग्राह्या। Then this line is found :— अत्र पञ्चमी वेधो द्वादश-नाडीभिः संपद्यते; ततो न्यूनया पञ्चम्या वेध-दोषो नास्ति।

13. v.r. in U. सप्तम्यां विशेषमाह।

14. v.r. R. ०व्याख्यातमेतत्।

अष्टम्यां विशेषमाह **व्रत-मात्र** इति। अष्टमी-व्रतेषु सामान्येन कृष्ण-पक्षाष्टमी पूर्वा, शुक्ल-पक्षाष्टमी परेति निर्णयः[1]। दूर्वाष्टमी-व्रते तु शुक्ल-पक्षोऽप्रयोजकः ॥६२॥

शिव-शक्ति-महोत्सवे कृष्ण-पक्षोऽप्रयोजकः। ज्येष्ठा-नक्षत्रमुपजीव्य ज्येष्ठा-व्रतं [2]निर्णीयते **ज्येष्ठेति**[2]। तत्र यदि[3] परेद्युर्ज्येष्ठा-नक्षत्र-योगस्तदा[4] शुक्ल-पक्ष-प्रयुक्तैव पर-तिथिर्गृह्यते। यदा पूर्वेद्युर्नक्षत्र-योगस्तदा शुक्ल-पक्ष-प्रयुक्तिमुपेक्ष्य पूर्व-विद्धा ग्राह्या ॥६३॥

[5]नक्षत्र-योगो यदि परेद्युर्मध्याह्नादूर्ध्वमनुवर्तते तदा पूर्व-दिने रात्रौ विद्यमानं नक्षत्र-योगम्[6] उपेक्ष्य पर-दिनमेव ग्राह्यम्। यदा भानु-वार-योगस्तदा पूर्वेद्यू रात्रौ नक्षत्र-योगं परेद्युर्मध्याह्नादूर्ध्वं नक्षत्र-योगञ्चोपेक्ष्य भानु-वार-प्रयुक्तो नक्षत्र-योग आदर्तव्यः ॥ ६४ ॥

अथ जयन्ती-जन्माष्टमी-व्रतयोस्तिथिं निर्णेतुं पर-मत-सिद्धं व्रतैक्य-भ्रम[7]-मपनुदति **जयन्त्याख्य**मिति। जन्माष्टम्या अवान्तर-भेदमाह **शुद्धा चे**ति ॥६५॥

सूर्योदयम् आरभ्य निशीथादर्वाक्[8] सप्तम्या कियत्यपि योगे सत्यष्टमी विद्धा भवति, तदयोगे शुद्धेत्युच्यते। तयोः शुद्धा-विद्धयोर्निर्णयमाह **शुद्धाया-मि**ति ॥ ६६-६७ ॥

जयन्त्याः स्वरूपमवान्तर-भेदञ्चाह **अष्टमी**ति। तत्र प्रथमे पक्षे तृतीय-पक्षे च सन्देहाभावं दर्शयति **शुद्धायामि**ति। द्वितीय-पक्षस्यावान्तर-भेदं निर्णयञ्चाह[9] **शुद्धाधिकायामि**ति ॥६८-६९॥

पूर्वेद्युरेव नक्षत्र-योगः परेद्युरेव नक्षत्र-योग इत्यनयोरेक-दिन-पक्षयो[10]-र्योगवत्या एव तिथेर्ग्राह्यत्वान्नास्ति सन्देहः। दिन-द्वये नक्षत्र-योग

---

1. v.r. R. निर्णयः replaced by अष्टमी-सामान्य-निर्णयमपीक्ष्य विशेष-निर्णयमाह दूर्वाष्टमीति।
2-2. v.r. F. and M. नियतम्। 3. v.r. M. तु।
4. v.r. M. ०योगो यदा तदा। 5. add.r. F. स।
6. v.r. M. रात्रौ नक्षत्र-योगं विद्यमानम्।
7. v.r. M and R. no 'भ्रमं'; U. व्रतैक्यमपवदति।
8. v.r. M and R. निशीथात् प्राक्। 9. v.r. R. no 'निर्णयञ्च'।
10. v.r. F. no 'पक्षयोः'।

इत्यस्मिन् पक्षे पूर्वा तिथिर्ग्राह्या*। नक्षत्र-योगस्यावान्तर-भेदास्तु तिथि-निर्णयोपयुक्ता न भवन्तीत्याह सद्रेति। शुद्धाधिकायां पूर्व-दिने सूर्योदये प्रवृत्तो नक्षत्र-योगः परेद्युरुदय-पर्यन्तमनुवर्तते चेत् सोऽयमुत्तमो योगः, निशीथमारभ्य प्रवृत्तो मध्यमः, निशीथादूर्ध्वं प्रवृत्तोऽधमः। एते त्रयोऽपि पक्षाः[1] फल-तारतम्यायैवोपयुज्यन्ते ॥७०॥

उपवासस्तु त्रिष्वपि प्रकारेषु पूर्वत्रैव। चतुर्थ-पक्षस्यावान्तर-भेदं निर्णयन्नाह विद्धाधिकायामपीति। पूर्वेद्युरेव परेद्युरेव वा नक्षत्र-योग इत्यनयोः पक्षयोः पूर्ववद् योगवत्येव ग्राह्या ॥ ७१ ॥

दिन-द्वयेऽपि[2] योग इत्ययं पक्षस्त्रिधा भिद्यते, पूर्वोत्तरयोर्दिनयोर्मध्ये एकस्मिन्नेव दिने[3] निशीथ-योग इत्याद्यः पक्षः, दिन-द्वये निशीथ[4]-योग इति द्वितीयः, उभयत्र निशीथ-योगो नास्तीति तृतीयः पक्षः ॥७२॥

एतेषु प्रथम-पक्षे निशीथ-योगवती ग्राह्या। इतरयोः पक्षयोः पर-तिथिर्ग्राह्या। वार-विशेष-योगस्तु फलाधिक्यायैवोपयुज्यते न तु तिथि-निर्णयायेत्याह—बुध इति ॥ ७३ ॥

पारणा-कालं त्रिधा विभज्य दर्शयति तिथ्यृक्षयोरिति। जन्माष्टमी-जयन्त्योर्यथोक्त-निर्णयानुसारेण कदाचिदुपवास-द्वयं प्रसज्येतेत्याशङ्क्य तद् वारयति यस्मिन्निति। अष्टमी-रोहिण्योर्योगाभावे जन्माष्टमी-व्रतमेवानुष्ठेयं न तु जयन्ती-व्रतम्। सत्यपि तद्योगे पूर्वोक्त-निर्णयानुसारेण यदि कदाचिदेकस्मिन्नेव दिने व्रत-द्वयं प्राप्नुयात्तदानीमुपवासस्य तन्त्रेणानुष्ठेयत्वान्नास्त्युपवास-द्वय-प्रसक्तिः। यदा तु यथोक्त-निर्णयानुसारेण जन्माष्टमी पूर्व-दिने प्राप्ता नक्षत्र-योगस्तु पर-दिने तदा तु जन्माष्टम्यां[5] पूर्व-निर्णयमुपेक्ष्य अलभ्य-योग-वशात्[6] पर-दिन एवानुष्ठाने सति नास्त्युपवास-द्वय-प्रसक्तिः ॥७४-७५॥

नवमी-दशम्योर्निर्णयमाह—नवमीति ॥७६-७७॥

---

*Here MS. R breaks off. 1. v.r. F. no 'पक्षाः'।

2. v.r. M. no 'अपि'। 3. v.r. F. no 'दिने'।

4. add.r. M. U. रोहिणी after निशीथ।

5. v.r. M and U. जन्माष्टम्याः। 6. v.r. U. अनन्य-योग-वशात्।

एकादशीं निर्णिनीषुरादौ तत्स्वरूपमाह **जयन्ती-व्रतवदिति**। जन्माष्टमी-व्रतस्याकरणे प्रत्यवायः स्मर्यते[1] न त्वनुष्ठाने फल-विशेषः। जयन्ती-व्रतस्य तूभयमपि स्मर्यते, [अतः] नित्यत्वं काम्यत्वञ्चेत्याकार-द्वयमस्ति। तद्वदेकादशी-व्रतस्याप्युभय-स्मरणादाकार-द्वयं ज्ञेयम्। अधिकारि-भेदेन तिथि-विशेषं निर्णेतुं दशमी-वेधस्य द्वैविध्यमाह **अरुणोदयेति** ॥ ७८ ॥

तिथ्यन्तराणामिवात्र वेधे त्रि[2]-मुहूर्तत्व-नियमो नास्तीत्याह **कलेति** ॥७९॥

विष्णु-भक्तेः साधारणत्वादरुणोदय-वेधाधिकारी वैष्णवः कीदृशो विवक्षित इत्यत आह **वैखानसेति**। तादृशं प्रति [3]निर्णयमाह—**विद्धेति**। अरुणोदये दशमी-युक्ता विद्धा, तद्रहिता शुद्धा। तत्र विद्धां परित्यज्य परेद्युरुपवासः। शुद्धायामपि यदि परेद्युरेकादश्यतिरिच्यते, अनतिरेकेऽपि यदि तत्र परेद्युर्द्वादश्यतिरिच्यते तदोभयत्र शुद्धामपि परित्यज्य परेद्युरेवोपवासः ॥८०-८१॥

स्मार्तं प्रति तिथि-निर्णयमाह **एकादशी द्वादशी चेति**[4]। यथोक्त-निर्णयस्य क्वचिदपवादमाह **श्रवणेनेति**। व्रतान्तरेषु तिथि-निर्णयमाह **उपवासेति**। पर-विद्धा ग्राह्येत्यभिप्रायः ॥८२-८६॥

द्वादशी-निर्णयमाह **द्वादशी पूर्व-विद्धैवेति**[5]। त्रयोदशी-निर्णयमाह **शुक्लेति**। शुक्ल-त्रयोदश्याः पूर्व-विद्धायाः स्वीकार्यत्वेऽप्यपराह्ण-मुहूर्त-स्पर्शाभावे पर-विद्धा ग्राह्या। कृष्ण-त्रयोदश्याः पर-विद्धायाः स्वीकार्यत्वेऽपि परेद्युस्त्रि-मुहूर्ताभावे पूर्व-विद्धैव ग्राह्या। अनङ्ग-त्रयोदशी-व्रते[6] शुक्ल-पक्ष-गताऽपि पर-विद्धा ग्राह्या। चतुर्दशी-निर्णयमाह **चतुर्दशीति**। व्रतान्तरेषूदये मुहूर्त-त्रयवती शुक्ल-चतुर्दशी पर-विद्धा ग्राह्या, अनन्त-व्रते तु नास्ति त्रि-मुहूर्त-नियमः। चैत्र-मासे[7] श्रावण-मासे च[8] शुक्ल-चतुर्दशीं पर-विद्धां परित्यज्य रात्रि-युक्तां पूर्वां गृह्णीयात्। सर्वेष्वपि मासेषु अपराह्ण-स्पर्शे सति शुक्ल[9]चतुर्दशी पूर्व-विद्धैव ग्राह्या ॥८७-९०॥

शिवरात्रि-निर्णयमाह **प्रदोषेति**। उभय-व्याप्तिरुत्तमा, निशीथ-मात्र-व्याप्तिर्मध्यमा, प्रदोष-मात्र-व्याप्तिरधमा। पारणे प्रतिपन्न्यायमत्रातिदिशति **तिथ्यन्त**

1. v.r. M. श्रूयते। 2. v.r. M. no 'त्रि'। U. त्रि-मुहूर्त-नियमो। 3. add.r. F. तिथि०। 4. M. no 'द्वादशी च'। 5. M. no 'पूर्व-विद्धैव'। 6. M. ०व्रतेषु। 7. M. no 'मासे'। 8. M. no 'च'। 9. M. शुक्ल-पक्षे।

इति। व्रत-विशेषे[1] पञ्चदशी-निर्णयमाह पूर्व-विद्धैवेति। पूर्वेद्युरष्टादश-नाडी-परिमिता चतुर्दशी यद्यस्ति, तदा सावित्री-व्रतमपि परेद्युः[2] कार्यम् ॥९१-९४॥

प्रत्याब्दिक-निर्णयं दर्श[3]-श्राद्धेऽतिदिशति श्राद्ध इति। प्रत्याब्दिकेऽभिहितस्यापि निर्णयस्य विस्पष्टार्थं पुनरुपन्यासः। साग्न्यनग्नि-व्यवस्था तु प्रत्याब्दिकाद्विशिष्यते॥ इष्टि-काल-[4]निर्णयमाह पर्वेति[5]। सन्धि-विषये[6] कश्चिद्विशेषमाह वृद्धिरिति। यदा घटिका-न्यूने[7] मध्याह्ने पर्व समाप्यते परेद्युश्च घटिका-चतुष्टय-वृद्धि-वशान्मध्याह्नादूर्ध्वमपि घटी[8]-त्रयं प्रतिपदनुवर्तते। तदानीं[9] घटिका-चतुष्टय-वृद्धेरर्धं घटिका-द्वयं पूर्वस्मिन् पर्वणि प्रक्षेपणीयम्. तथा सति पूर्वेद्युर्मध्याह्नादूर्ध्वं घटिका-मात्रं पर्वानुवृत्तिर्भवति, एवं सत्यनुष्ठाने[10] महान् विशेषो भवति। वृद्धि-प्रक्षेपाभावे पूर्वेद्युरन्वाधानं सन्धि-दिने त्विष्टिः। वृद्धि-प्रक्षेपे तु सन्धि-दिनेऽन्वाधानं परेद्युरिष्टिरिति विशेषः। अनेनैव न्यायेन क्षय-प्रक्षेप उदाहरणीयः। यदा मध्याह्नादूर्ध्वं घटिका-मात्रं पर्वानुवर्तते, परेद्युश्च घटिका-चतुष्टयं प्रतिपदुपक्षीयते, तदानीं तस्यापि क्षयस्यार्धं प्रक्षेपणीयम्, तथा सति घटिका-न्यूने मध्याह्ने सन्धिर्भवति। अत्र स्वाभाविकं सन्ध्यनुसारेण सन्धिदिनेऽन्वाधानं प्राप्नोति। क्षय-प्रक्षेपानुसारेणेष्टिः सन्धि-दिन इति विशेषः ॥९५-१०१॥

---

1. F. v.r. ०विषये। 2. M. ०व्रतमपरेद्युः। 3. M. no 'दर्श'। 4. v.r. U. इष्ट्यर्थं तिथि०।

5. यदा मध्याह्नात् पूर्वं मध्याह्ने वा पर्व-प्रतिपदोः सन्धिर्भवति पर-दिने प्रतिपत्-तृतीयांशे सत्यपि सन्धि-दिन एव यागस्तत्पूर्व-दिनेऽन्वाधानम्। मध्याह्ने पुरा वा पर्व-सन्धौ प्रतिपत्-प्रवेश एव याग-समाप्तिः। अन्यथा चेत् पुनः प्रणीय कृत्स्नेष्टिं कुर्यात्। यदा मध्याह्नादूर्ध्वं पर्व-सन्धौ सति पर-दिने प्रतिपच्चतुर्थांशेऽपि यागस्तत् पूर्व-दिनेऽन्वाधानम्। अयं निर्णयः ( fol. 14 b of Ms. U. ). आश्वलायनादीनां पर्व-द्वये समानः। वाजसनेयिनां पौर्णमास्यां विशेषमाह "यस्तु वाजसनेयी"ति। सङ्गवादूर्ध्वं मध्याह्नात् पूर्वं मध्याह्ने वा पौर्णमासी यदा प्रतिपदि भवति तदा सन्धिदिनात् पूर्वेद्युर्नैवाप्यन्वाधानमस्ति, किन्तु सन्धि-तिथावन्वाधानम्। परेद्युर्यागस्तत्-पूर्व-दिनेऽन्वाधानम्। दर्श-याग-निर्णयस्तु सर्वेषामेक एव। सन्धि-तिथावन्वाधानं परेद्युर्यागः। वाजसनेयि-व्यतिरिक्तानां सद्यस्काल-करण-पक्षे निर्णयमाह सन्धिश्चेदिति। संगवावर्तयोर्मध्ये पौर्णमासी-प्रतिपदोः संधौ सति पूर्वोदाहृत-वचनेन सन्धि-दिनात् पूर्वेद्युरन्वाधानं प्राप्तं तत्र सद्यस्कालिक-वाक्येन वैकल्पिकेन सद्योऽन्वाधानं कृत्वा यागः। आवर्तनं मध्याह्न इत्यर्थः॥ (fol. 15a, l. 8). 6. सन्धि-निश्चये।

7. v.r. M. ०न्यूनं०। 8. v.r. M. घटिका-त्रयं ; U. no घटी-त्रयं। 9. v.r. M. तदा ; add.r. प्रतिपदः after तदानीं। 10. M. एवं चानुष्ठाने।

आश्वलायन-मते दर्श-श्राद्धमिष्टिं [ च ] निर्णीय मतान्तरेण तन्निर्णयमाह[1] **बौधायन-मत** इति। प्रतिपद्दिने[2] द्वितीया सूर्यास्तमयादर्वाक् त्रि-मुहूर्ता यदि स्यात्तदा प्रतिपदिष्टि-योग्या न भवति। अतः पूर्वेद्युरिष्टिस्ततोऽपि पूर्वेद्युः[3] श्राद्धान्वाधाने। विकृतौ विशेषमाह **इष्ट्यादी**ति। दर्श-पूर्णमासेष्टिः प्रकृतिः, तद्विषयो निर्णयः पूर्वमुक्तः। "ऐन्द्राग्नमेकादश-कपालं निर्वपेदि"त्यादिकेष्टि-र्विकृतिः, सा पर्वण्येवानुष्ठेया, न तु प्रकृतिवत् प्रतिपद्यनुष्ठेया। एवञ्च[4] विकृति-रूपयोः पशु-सोमयोरपि पर्वण्येवानुष्ठानं द्रष्टव्यम्।

प्रकरणान्तर-प्रतिपाद्यं संगृह्णाति **पञ्चमे त्वि**ति। पञ्चमे प्रकरणे पूर्व-भागे नक्षत्र-योग-करण-वार-संक्रान्ति-ग्रहण-काला निर्णीताः। उत्तरार्द्धे[5] युगादि-मन्वादि-प्रभृति-काल-विशेष-स्वरूपं तत्र कर्तव्यं स्नान-दानादि च निरूपितम्[6]। तत्र नक्षत्र-निर्णयमाह **यस्मिन्नि**ति। विष्कम्भादि-योगस्य निर्णयमाह **पूर्वः** स्यादिति ॥१०१-१०८॥

ववादि-करणस्य निर्णयमाह **करणमि**ति। वार-विषये निर्णेतव्याभावं दर्शयति **वारेष्वि**ति। संक्रान्ति-निर्णयमाह **आसन्ने**ति। संक्रान्ति-कालस्य यावद्यावत् प्रत्यासत्तिस्तावत् तावत् पुण्यातिशयो द्रष्टव्यः। मेषादिषु[7] चतुर्षु राशि-त्रिकेषु प्रथमाश्चत्वारश्चराः, मध्यमा वृषभाद्याः स्थिराः अन्त्या मिथुनाद्या द्विःस्वभावाः। तेषु सर्वेषु यथोक्तायां[8] विंशत्यादि-संख्यायाः पुण्य-कालावधिरभि-धीयते। यथोक्तस्य सामान्यस्य क्वचिदपवादमाह **अहरि**ति। यदा कर्कट-संक्रान्तिरुदयानन्तरं भवति तदा पूर्वासां विंशति-घटिकानां पुण्य-कालत्वात् पूर्वोक्त-न्यायेन रात्रावनुष्ठानं प्राप्तम् अतस्तत् परित्यज्य विंशतिर्नाड्यो[9]

---

1. M. no तत्। 2. add.r. F. अपि। 3. F. no इष्टिस्ततोऽपि पूर्वेद्युः। 4. M. no च। 5. v.r. U. उत्तर-भागे।

6. See p. 85. V. 104. ll. 16-17. "एतेनान्यथा" etc. Here लक्ष्मी-देवी does not agree with "भट्ट" who says that the first part deals with, among other things, संक्रान्ति, etc. According to लक्ष्मी-देवी, संक्रान्ति, etc. are dealt with in part II.

7. v.r. M. मेषादि॰। 8. v.r. M. यथोक्त॰। 9. add.r. U. उत्तराः।

ग्रहीतव्याः[1]। यदा तु सङ्गव-मध्याह्नादि-काले कर्कट-संक्रान्तिस्तदा दिवस एव पूर्व-नाडीष्वनुष्ठातुं शक्यत्वात् पूर्व-नाडी-प्राशस्त्यं तत्र चरितार्थम्। अनेनैव न्यायेन सर्वेषु संक्रमेषु यथा दिवस एवानुष्ठानं भवति तथा पूर्वोत्तर-भावो व्यवस्थापनीयः[2]। रात्रि-संक्रमणे विशेषमाह **रात्राविति**। रात्रौ द्वितीय-प्रहरस्य चरम-घटिका तृतीयप्रहरस्य प्रथम-घटिका इत्येवं घटिका-द्वयात्मक[3]-कालोऽर्धरात्रस्तस्मादधः पूर्व-रात्रौ संक्रमणे सति पूर्व-दिने मध्याह्नस्योपरि प्रहर-द्वये स्नानादि-क्रिया कार्या। अर्ध-रात्रादूर्ध्वं संक्रमणे सति उत्तर-कालीनादुदया-दूर्ध्व-प्रहर-द्वयं पुण्यम्। पूर्णेऽर्धरात्रे यथोक्ते घटिका-द्वये संक्रान्तौ पूर्वोत्तर-दिन-द्वयं पुण्यम् ॥१०८-११५॥

अयनयोर्विशेषमाह **कर्कट** इति। रात्रावयन-संक्रमे दिन-द्वयं न पुण्यं किं तु रात्रावेव[4] पूर्वापरीभावेन स्नानादि-क्रियेति दाक्षिणात्य-शिष्टाचारः,[5] [6]"राहु-दर्शन-संक्रान्ति-विवाहात्यय-वृद्धिषु। स्नान-दानादिकं कार्यं निशि काम्य-व्रतेषु चे"ति वचनात्। उदीच्य-शिष्टाचारस्तु[7] रात्रावयन-संक्रमे दिन-द्वयं न पुण्यं[6] किन्तु निशि[8] कर्कटे पूर्वमेव दिनम्, [9]निशि मकरे तु परमेव दिनं ग्राह्यमिति[9]। [10]ग्रहण-निर्णयमाह **पूर्णिमेति**[10]। बालानां विशेषमाह **अपराह्ण** इति। पञ्चधा विभक्ते दिवसे ग्रहण-भागे तत्पूर्व-भागे च न भुञ्जीतेत्यर्थः। अस्तोदयादौ विशेषमाह **अस्तेति**। तदेवं निर्णीतमर्थं संग्रहेणानुक्रम्योपसंहरति **तमेवमिति**[11]।

इति कालमाधवीय कारिका-लघु-विवरणम्[12]॥

---

1. v.r. U. ग्राह्याः। After this, there is this additional reading in F, "पूर्व-भागे प्राशस्त्यं बाधित्वोत्तर-भागेऽनुष्ठानमेवं तात्पर्यम्।"

2. v.r. M. व्यवस्थाप्यः। 3. v.r. M. घटिका-द्वय-रूप०। 4. F. no 'तु रात्रावेव'।

5. According to लक्ष्मीदेवी, this is really the custom of the Easterners, and the following custom that of the Southerners.

6-6. M. no राहु···पुण्यं। 7. v.r. M. उदीच्य-शिष्टास्तु। 8. F. no निशि।

9-9. M. no निशि...मिति। add.r. M. and U. कार्मुकं तु परित्यज्य झषं संक्रमते रविः। प्रदोषे......।

10-10. M. no. 11. v.r. F. ईदृशमिति, v.r. तमेव इति ; see our Text, p. 40.

12. v.r. F. इति श्रीमाधवाचार्य-कृतं स्वीय-काल-निर्णय-टीका-विवरणं सम्पूर्णम्। M. इति धर्म-शास्त्रे लघु-माधवी सविवृतिः।

# KĀLA-NIRṆAYAKA-KĀRIKĀ-VYĀKHYĀ

BY VAIDYANĀTHA

वैद्यनाथी

## काल-निर्णय-कारिका-व्याख्या

नत्वा गजाननं देवमगजानन्द-वर्धनम् ।
काल-माधव-पद्यानि विवरिष्ये यथामति ॥

विघ्न-विघाताय मङ्गलमाचरति **वागीशाद्या**[1] इति । सुमनसो देवाः सर्वार्थानां सर्व-पुरुषार्थ-साधनानाम्[2] । उपक्रमे आरम्भे ॥ १ ॥

इदानीं "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन" इति स्मरणाद् गुरु-देवतयोः स्मरणमाचरति **सोऽहमिति**। सोऽहं माधवाचार्य-नामा, विवेकस्य पदवीं मार्गं प्राप्य हृदि अव्याहतं श्रीकण्ठं महादेवं भजे ध्यायामीत्यर्थः। कीदृशोऽहं ? आम्नायो वेदस्तद्रूपे तीर्थे परं केवलं मज्जन् स्नानं कुर्वन्, तदेक-पराय[ण] इत्यर्थः। तथा सज्जन-सङ्ग-रूपेण तीर्थेन निपुणः निर्णीत-शास्त्र-तत्त्वः। तथा सद्वृत्तं साधूनामाचरणं तदेव तीर्थं श्रयन् आश्रयन् । तथा श्रीभारती-तीर्थतः एतन्नामकाद् गुरोः सकाशात्, लब्धां प्रभाव-लहरीं देवता-प्रसाद-रूपां लहरीम् आकलयन् प्राप्नु-वन्नित्येकोऽर्थः। भारती-रूपात्तीर्थाल्लब्धां प्रभाव-लहरीं पाण्डित्य-रूपामाक-लयन्नित्यपरः। तथा विद्या ब्रह्मविद्या तद्रूपं तीर्थम् उपाश्रयन् सेवमान इत्यर्थः। एतस्यैव विद्यारण्य इति नाम प्रसिद्धम्[3] ॥ २ ॥

1. In MS. Q, the Kārikās of the Kāla-Mādhava have been reproduced. 2. G. ॰साधारणानाम् ।

3 The commentary of this is not found in MSS. G and Q

13

धर्म-[प्रवृत्तं कं (?) प्रवर्तकं] स्वदेशाधिपतिं वर्णयति—सत्यैकेति। श्रीमान् बुक्कण-नामा क्ष्मापतिः राजा विजयते। कीदृशः ? सत्य-रूपं यदेकं मुख्यं व्रतं तत्पालकः। तथा द्विगुण-बुद्धिमानित्यर्थः। अथवा द्वौ गुणौ सत्त्व-रजोरूपौ यस्यां तादृशी धीर्यस्य, न तु तमोगुणशालिनीत्यर्थः। तथा त्रीन् धर्मार्थ-कामान् अर्थयते प्रार्थयते तच्छीलः। अथवा तिस्रः प्रभावोत्साह-मन्त्रजाः शक्तीरर्थयते तच्छीलः इति। तथा चतुर्णां वेदानां सामाद्युपायानां वा वेदिता ज्ञाता। तथा पञ्चसु स्कन्धेषु तन्नामकेषु सहायादि-पदार्थेषु कृत कुशलः। तदुक्तं नीति-शास्त्रे—"सहायाः साधनोपाया विभागो देश-कालयोः। विनिपात-प्रतीकारः सिद्धिः पञ्चाङ्गमिष्यते॥" अस्यार्थः—'सहायाः' राज-कार्ये मन्त्रि-सैनिकाद्याः। कार्यस्य 'साधने उपायाः' सामादयः। तथा 'देश-कालयोः' 'विभागः' अस्मिन् देशे अस्मिन् कालेऽयमुपाय इत्येवंरूपः। तथा 'विनिपातस्य' राष्ट्र-रोगोत्पत्त्यादि-रूपस्य 'प्रतीकारो' निवारणम्। तथा 'सिद्धिः' इष्ट-लाभः, एते पञ्च स्कन्धा राज्याङ्ग-मित्यर्थः। पुनः कीदृशो राजा ? षडन्वय-दृढः षण्णां गुणानाम् अन्वयेन दृढः अजेय इत्यर्थः। षण्णां शास्त्राणामित्यर्थान्तरम्। पुनः सप्तभिरङ्गैः सर्व-सहन-शीलः। तानि च—"स्वाम्यमात्य-सुहृत्-कोष-दुर्ग-राष्ट्र-बलानि च" इति नीति-शास्त्रोक्तानि ज्ञेयानि। तथा अष्टौ व्यक्तयो यस्य तादृशस्य शिवस्य कलाया अंश [स्य] धारकः। ताश्च मूर्तयः—जलाग्नि-यजमान-चन्द्र-सूर्याकाश-पृथ्वी-वायु-रूपा आगमोक्ताः। पुनः, नव-निधिः नव-संख्यका निधयो यस्य। ते च महापद्मादयः प्रसिद्धाः। नवानां रसानां निधिरित्यर्थान्तरम्। नवो नूतनो निधिरिति वा। पुनः पुष्यद्दश-प्रत्ययः पुष्य [न्ति (?) न्तो] [दश (?) दशा] यस्य तादृशः प्रत्ययो ज्ञानं यस्य तादृशः। तथा स्मार्तानां पाखण्डि-भिन्नानां शिष्टानाम् उच्छ्रायस्य वृद्धेः धुरन्धरः तत्प्रवर्तक इत्यर्थः[1] ॥ ३ ॥

व्याख्यायेति। शिष्यावधानाय वक्तव्यं[2] प्रतिज्ञायते[3]। पाराशरान् पराशर-प्रोक्तान्। एतेन काल-निर्णयस्य प्रयोजनं धर्मानुष्ठानमुक्तम् ॥ ४ ॥

1. The commentary of this verse is not found in MSS. G and Q.

2. G. No 'वक्तव्यं'। 3. v. r. G. प्रतिज्ञाते (?)।

नन्वेतावतापि तव कुतो धर्म-निर्णय-करणे सामर्थ्य ? तत्राह व्यामूढानामिति । इह लोके व्यामूढानां पुरुषार्थ-ज्ञान-शून्यानां तनुभृतां शरीरिणां जाह्नवी एकं तीर्थम्, पुरुषार्थ-प्राप्त्युपाय इत्यर्थः । तथा [सन्] विवेक [स्य] उदयो येषां तेषां पुरुषाणां पण्डितानां विद्या-रूपं तीर्थम् अस्तीति शेषः । कीदृक् ? प्रकृति-विमलं प्रकृत्यैव विमलम् । तथा सर्वेषां जनानां प्रथमतः सुखदं भारती-तीर्थम् आहुः, शिष्टा इति शेषः । भारती-तीर्थ-नामानं पूर्वोक्तं गुरुम् इत्यपरोऽर्थः । तस्मिन् भावात् भक्ति-वशात्, विमलं संशय-शून्यं मनो यस्य, तादृशस्य मम निर्णये शक्तिरस्तीत्यर्थः[1] ॥ ५ ॥

वक्ष्यमाणानुक्रमणस्य प्रयोजनमाह अथ इति । अनुक्रम्यते संक्षेपेण कथ्यते । निर्णिनीषितः निर्णेतुमिष्टः । तावतैवेति अनुक्रमण-मात्रादेवेत्यर्थः । अनुतिष्ठासुः अनुष्ठानं कर्तुमिच्छुः । तथा चानुष्ठान-सौकर्यम् अनुक्रमण-प्रयोजनमित्यर्थः ॥ ६ ॥

ननु वादिकृत-विप्रतिपत्तौ सन्देहात् कथं निर्णयः ? तत्राह तत इति । मीमांसा धर्म-निर्णयेच्छा, तच्छीलं चित्तं यस्य तस्य समाधानाय सन्देहनिरासाय[2] । तत् अनुक्रान्तमर्थ-जातम् । यथान्यायं न्यायानुसारेण । विवरिष्ये विस्तार-पूर्वकं कथयिष्य इत्यर्थः ॥ ७ ॥

पञ्चेति । प्रकरणानि निरूपणीयार्थ-स्थानानि । तेषु क्रम इत्यन्वयः । उपोद्घातः[3] प्रकृत-सिद्ध्यर्थ-चिन्तनम् एकम् । संवत्सर-प्रकरणं द्वितीयम्, प्रतिपत्-प्रकरणं तृतीयम्, अवशिष्ट-तिथि-प्रकरणं चतुर्थम्, नक्षत्रादि-प्रकरणं पञ्चममिति क्रमेणेत्यर्थः ॥ ८ ॥

उपोद्घात-प्रकरणे वक्तव्यं दर्शयति उपोद्घात इति । काल-सत्त्वं काल-साधनम् । तस्य कालस्य निर्णय-योग्यता । अब्दादि-खण्ड-कालस्य निर्णय-

---

1. The commentary of this verse is not found in MSS. G and O
2. P. ०निवारणाय ।
3. Q. No 'उपोद्घातः' ।

योग्यत्वेऽपि[1] नित्य-कालस्य कथमनुष्ठानाङ्गत्वम् ? तत्राह ईश्वर इति। ईश्वरस्य सकल-कर्मारम्भे स्मरणस्य[2] विधानात् तस्य च नित्य-कालत्वादनुसन्धानार्थं तन्निर्णय इत्यर्थः। तदुक्तम्—"यस्य स्मृत्या च नामोक्त्या तपोयज्ञ-क्रियादिषु। न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्[3] ॥" इति, 'सर्वेष्वारम्भ-कार्येषु त्रयस्त्रिभुवनेश्वराः। देवा दिशन्तु नः सिद्धिं ब्रह्मेशान-जनार्दनाः ॥" इति च ॥ ८ ॥

जन्य इति। जन्य-काल-मध्ये अब्दस्य मुख्यत्वं प्रधानत्वम्। अयनर्त्वादीनान्तु तदवयवत्वमित्यर्थः। एवञ्चाब्दमारभ्यैव जन्य-काल-निरूपणं युक्तमिति भावः। प्रकरणान्तरे संवत्सर-प्रकरणे ॥ १० ॥

अब्द इति। अब्दः संवत्सरः पञ्च-विधः, चान्द्रः सौरः सावनो नाक्षत्रो बार्हस्पत्य इति। तत्र चान्द्रो नाम चान्द्र-द्वादश-मासात्मकः, सौरो नाम संक्रान्ति-घटित-द्वादश-मासात्मकः, [4]नाक्षत्रो नाम नक्षत्र-घटित-द्वादश-मासात्मकः,[4] सावनस्त्रिंशद्दिवसात्मक-द्वादश-मासात्मकः, बार्हस्पत्यो नाम बृहस्पतेरेक-राशि-भोग-पर्यन्तः। तत्र चान्द्रस्तिलकादि-व्रते[5] ग्राह्यः। तत्र[6] तिलक-व्रतं भविष्योत्तर-पुराणे—"वसन्ते किंशुकाशोक-शोभिते प्रतिपत्तिथिः। शुक्ला तस्यां प्रकुर्वीत स्नानं नियममास्थितः ॥ ललाट-पट्टे तिलकं[7] कुर्याच्चन्दन-पङ्कजम्। ततः प्रभृत्यनुदिनं तिलकालङ्कृतं मुखम्। धार्यं संवत्सरं यावच्छशिनेव नभस्थलम्[8] ॥" इति। अत्र शुक्ल-प्रतिपदमारभ्य विधानाच्छुक्ल-प्रतिपदादि-दर्शान्त[9]-चान्द्र-मास[10]-घटितं वर्षम्। सौर-वर्षानुसारेण सुजन्मावाप्ति-व्रतं विष्णुधर्मोत्तरे उक्तम् "मेष-संक्रमणे

---

1. G. No 'अपि'। 2. G. सकारंभेस्य (?); Q. स्मरण०।

3. KālaM. p. 65. KālaS. p. 3. v. r. क्रियादिकम्। नूनं…। CaturVC. श्राद्ध-कल्प, p. 108. "गारुडे"।

4-4. P. No. 'नाक्षत्रो…मासात्मकः'। 5. G. तिलक-व्रते।

6. P. तत्। 7. P. लिखितं।

8. BhavP. उत्तर-पर्व, 18. 4. 11-12. v. r. शोभने…। नियम-तत्परः।

9. G. दर्शंत (?)। 10. P. No 'चान्द्र-मास'।

भानोः सोपवासी नरोत्तमः। पूजयेद् भार्गवं देवं रामं शक्त्या[1] यथाविधि[2] ॥" इत्यारभ्य "मीन-संक्रमणे मत्स्यं वासुदेवञ्च पूजयेत्" इत्यन्तेन ग्रन्थेन। अन्ते च "कृत्वा व्रतं वत्सर[3] मेतदिष्टं स्वर्ले च्छेषु तिर्यक्षु न चापि जन्म" इत्युपसंहृतम्। अत्र संक्रान्तिमारभ्य वत्सर[4]-गणनात् सौरं वर्षं ग्राह्यम्। तथा गोसत्रं गवामय-नाख्यम्। तत्र सावनः संवत्सरः। स च षष्ट्यधिक-शत-त्रय-दिनात्मकः ॥ ११ ॥

त्रय इति। आचार्य-संवादे तु[5] त्रयाणामपि संवत्सराणां विकल्पेन ग्रहणम्। आयुर्दाय-गणनायां नाक्षत्रः संवत्सरो ग्राह्यः। [6]अधिवत्सरो नाम मध्यम-मानेन गुरु-संक्रान्ति-हीनो यश्चान्द्रो वत्सरः। तत्र बार्हस्पत्यः संवत्सरो ग्राह्यः[6] ॥ १२ ॥

अथ चान्द्रस्यावान्तर-भेदानाह चान्द्राणामिति। चान्द्राणां प्रभवादि-नाम्नां पञ्चके पञ्चके युगे संघे। प्रथमस्य संवत्सर इति, द्वितीयस्य परिवत्सर इति, तृतीयस्येदावत्सर इति, चतुर्थस्यानुवत्सर इति, पञ्चमस्योद्वत्सर इति संज्ञा। एवं पञ्चसु जातेषु पुनर्द्वितीय-पञ्चके संज्ञा ज्ञेया। तथा च ब्रह्मवैवर्ते—"संवत्सरस्तु प्रथमो द्वितीयः परिवत्सरः। इदावत्सरस्तृतीयश्चतुर्थश्चानुवत्सरः ॥ इद्वत्सरः[7] पञ्चमस्तु तत्सङ्घो[8] युग-संज्ञकः[9]।" इति ॥ १३ ॥

एतेषां विनियोगो विष्णुधर्मोत्तरे—"संवत्सरे तु दातॄणां तिल-दानं महा-फलम्। परि-पूर्वं तथा दानं यवानां द्विज-सत्तम ॥ इदा-पूर्वं च वस्त्राणां

---

1. P. भक्त्या।

2. VisṇuD., 3. 199; second chapter of Kāla-Mādhava, VīraM; समय-प्रकाश, p. ll. SmrtiK. p. 454. ll. 17. 18. CaturVC. व्रतखण्ड, p. 727.

3. P. संवत्सर°। 4. P. संवत्सर°। 5. P. No 'तु'।

6-6. Q. No. 'अधि...ग्राह्यः'।

6. P. add. r. स चाधिमासवत् काम्य-कर्मसु वर्ज्यः।

7. G. इषुमासः (?)। 8. G. ततो (?)।

9. SmṛtiK. p. 432. ll. 24-25, "माधवीये ब्रह्म-वैवर्ते। VīraM. समय-प्रकाश, p. 12. KalaM. 2.

धान्यानां चानु-पूर्वके[1]। इत्-पूर्वं रजतस्यापि दानं प्रोक्तं महाफलम्[2] ॥" इति तत्राह[3] **तिल** इत्यादि। **उग्र** इति। दक्षिणायनं कर्कादि-ऋतु-त्रयम्, तत्[4] उग्र-दैवते कर्मणि ग्राह्यम्। उत्तरायणन्तु मकरादि-ऋतु-त्रयम् सौम्ये कर्मणि। तदुक्तं वैखानस-संहितायाम्—"मातृ-भैरव-वाराह-नारसिंह-त्रिविक्रमाः। महिषासुर-हन्त्री च स्थाप्या वै दक्षिणायने[5] ॥" इति। उत्तरायणस्य सौम्य-कर्माङ्गत्वं[6] स्मृति-प्रसिद्धम् "उदगयने आपूर्यमाणे"त्यादौ ॥ १४ ॥

**वसन्तादी**ति[7]। वसन्ताद्याः षड् ऋतवो द्विधा[8], चान्द्राः सौराश्च। तत्र चान्द्र-मानेन चैत्रादि-मास-द्वयं वसन्तः। ज्यैष्ठादि-मास-द्वयं ग्रीष्मः। श्रावण-भाद्रपदौ वर्षर्तुः। आश्विन-कार्त्तिकौ शरत्। मार्गशीर्ष-पौषौ हेमन्तः। माघ-फाल्गुनौ शिशिरः। तथा च श्रुतिः—"मधुश्च माधवश्च वासन्तिकावृतू, शुक्रश्च शुचिश्च ग्रैष्मावृतू। नभश्च नभस्यश्च वार्षिकावृतू। इषश्चोर्जश्च शारदावृतू। सहश्च सहस्यश्च हैमन्तिकावृतू[9]। तपश्च तपस्यश्च शैशिरावृतू" इति[10]। यद्यपि मास-द्वयात्मक एक एवर्तुस्तथापि 'ऋतू' इति द्विवचनं तदवयव-मास-द्वयाभिप्रायम्। मध्वादि-शब्दाश्चैत्रादि-मास-वचनाः[11]। अत्र च वसन्तस्य प्राथम्यं, "मुखं वा एतदृतूनां यद्वसन्त" इति श्रुति-वशादवगन्तव्यम्। विवस्वतः सूर्यस्य सम्बन्धिनः, सौरा इत्यर्थः। ते च[12] मीनाद्या मेषाद्या वेति[13] विकल्पः। तथा च श्रुतिः "मीन-मेषयोर्मेष-वृषभयोर्वा वसन्त" इति ॥ १५ ॥

---

1. G. अनुवत्सरे।

2. ViṣṇuD. 3.317. 2-3. v. r. संवत्सरे तथा दानं तिलस्य च महाफलम्।··· द्विज-सत्तमाः। इदा-पूर्वेऽन्न-वस्त्राणां···। उदा-संवत्सरे दानं रजतस्य महाफलम्। KālaM. 2.

3. Q. No 'तत्राह'।

4. P-Q. No. 'तत्'।

5. KālaM. 2. SamayaM. p. 173. KālaS. p. 7. NirS. p. 2. l. 25

6. Q. कर्म-ग्राह्यत्वमुक्तं।

7. P-Q. वसन्तादिति।

8. P. द्विविधाः।

9. G. हैमन्तावृतू।

10. G. No 'इति'। KālaM. 2.

11. P. ०संज्ञाः।

12. Q. No 'च'।

13. G. मेषाद्यास्त्वेति।

ऋतु-विनियोगस्तु "वसन्ते ब्राह्मणोऽग्नीनादधीत" इत्यादि-श्रुतौ[1] ज्ञेयः। एवं विष्णुधर्मोत्तरे[2] षट्स्वृतुषु पृथक् पृथक् षण्मूर्ति-पूजोक्ता। तथा[3] वसन्ते स्नानानुलेपनादि-दानम्, ग्रीष्मे पानकादि-दानम् उक्तम्[4]। देवीपुराणे वर्षासु तिल-दानमुक्तम्। तथा[5] विष्णुधर्मोत्तरे एवं शरद्यन्न-दानम्, हेमन्ते वस्त्राग्नि[6]-दानम्, शिशिरे च वस्त्र-दानम् उक्तम्[7]। तदाह **तेष्विति**।

अथ मासो निर्णीयते **मासास्त्वि**त्यादिना। सावनस्त्रिंशद्भिरहोरात्रैः परिमितो लोक-व्यवहारे प्रसिद्धः। सूर्यस्यैक-राशि-भोगो यावत्कालं स सौरः। अश्विन्यादि-सप्तविंशति-नक्षत्र-परिवृत्तो नाक्षत्रः॥ १६॥

[8]चान्द्रः शुक्लादि-दर्शान्तः पूर्णिमान्तश्चेति द्विविधः। तदुक्तं ब्रह्मसिद्धान्ते[8]— "चान्द्रः शुक्लादि-दर्शान्तः सावनस्त्रिंशता दिनैः। एक-राशौ रविर्यावत्कालं मासः स भास्करः[9]॥" इति। विष्णुधर्मोत्तरे—"सर्वर्क्ष-परिवर्तैस्तु नाक्षत्रो मास उच्यते"[10]। एतेषां व्यवस्थामाह—असौ विप्र-वैश्ययोरिति। असौ चान्द्रः, विप्र-वैश्ययोर्विहिते कर्मणि ग्राह्य इत्यर्थः। राज्ञः कर्मणि सौरः। सावनस्तु यज्ञे गवामयनादौ, त्रिंशद्दिनात्मकस्यैव मासस्य ग्रहणात्। ज्यौतिषिके आयुर्दाय-विभागादौ[11] परो नाक्षत्र इत्यर्थः[12]। तदुक्तं ब्रह्मसिद्धान्ते—"अमावास्या-

---

1. P.-Q. श्रुत्या। KālaM. 2.
2. G. विष्णुधर्मोत्तरीये। 3. G. तथा च।
4. P. No 'उक्तं'। 5. P. No 'तथा'। 6. P. वस्त्रादि॰।
7. G. No 'उक्तं'।
8-8. Q. No 'चान्द्रः—ब्रह्मसिद्धान्ते'।
9. KālaM. 2. MalaMT. p. 741. ll. 7-9. SamayaM. p. 145 KālaS. p. 10. SmṛtiC. श्राद्ध-काण्ड, p. 118. "स्मृत्यन्तरे"; S'rāddhaC., p. 70. S'rāddhaT. p. 253. ll. 1-2. MadanaP. p. 505.
10. KālaM. 2. ViṣṇuD. p. 43 (b), v. 17. VīraM, समय-प्रकाश, p. 15. MalaMT. p. 740. l. 26—751. l. 10.
11. P. ॰विवाहादौ। 12. P. नाक्षत्रो ग्राह्यः।

परिच्छिन्नो मासः स्याद् ब्राह्मणस्य तु। संक्रान्ति-पौर्णमासीभ्यां तथैव नृप-वैश्ययोः[1]॥" इति। दर्शान्तानां पूर्णिमान्तानां मास-विशेषाणां चैत्रादि-संज्ञा नक्षत्र-प्रयुक्ता। तदुक्तं सङ्ग्रह-काण्डे[2]—"इ इ चित्रादि-ताराणां परिपूर्णेन्दु-सङ्गमे। मासाश्चैत्रादयो ज्ञेयास्त्रिकैः षष्ठान्त्य-सप्तमा"[3] इति। [4]परिपूर्णेन्दु-सङ्गमे यत्सम्बन्धि-पौर्णमास्यां 'चित्रादि-ताराणां'[4] 'इ इ' भवत इति शेषः। ते मासाश्चैत्र-वैशाखादि-संज्ञा इत्यर्थः। यस्मिन् मासे पूर्णिमा चित्रा-स्वात्योरन्य-तरेण युज्यते स चैत्रः, एवं वैशाखादयोऽपि विशाखादि-नक्षत्र-योगेन ज्ञेयाः। 'षष्ठो' भाद्रपदः। 'त्रिकैः' शततारा[5]-पूर्वभाद्रपदोत्तरभाद्रपदाख्यैस्त्रिभिस्तत्-पूर्णिमा-योगे[6]। 'सप्तम' आश्विनः रेवत्यादि-त्रिक-योगे। 'अन्त्यः' फाल्गुनः पूर्वफल्गुन्यादि-त्रिक-योग इत्यर्थः। सौरादि-मास-त्रय-मध्ये क्वचित् कस्यचित् प्राशस्त्यं ज्योतिर्ग्रन्थे उक्तं, "सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः। आब्दिके पितृ-कार्ये च चान्द्रो मासः प्रशस्यते[7]॥" इति॥ १७॥

मल-मासं निरूपयति **चान्द्र** इति[8]। तदुक्तं ब्रह्म-सिद्धान्ते[9] "चान्द्रो मासो ह्यसंक्रान्तो मल-मासः प्रकीर्तितः[10]" इति। अयमर्थः[11]—शुक्ल-प्रतिपदादि-

---

1. KālaM. 2. KālaV. p. 6. "पारस्करः"। NirS. p. 6. ll. 15-16. SmṛtiK. p. 452. ll. 9-10. 2. P. ०खण्डे।

3. KālaM. 2. MalaMT. P. 764. ll. 3-5. v. r. पूर्णे-पर्वेन्दु-संगते। SmṛtiK. P. 451. ll. 12-13. v. r. परिपूर्णेन्दु-संगते।

4-4. G. No. 'परि...ताराणां'। 5. P-Q. शततारका०।

6. P. O. योगेन।

7. KālaM. 2. VīraM. समय-प्रकाश, p. 17. S'rāddhaC. p. 69. NirS. p. 6. ll. 20-21. SmṛtiK. p. 461. ll. 30-31. KālaV, p. 395. "योगलौकेन तूक्तं", ; v. r. सावनो मतः। मासश्चन्द्रमसः स्मृतः।

8. P. add. r. 'माघादि [ मास-भेदे ] ष्विति पूर्वार्धं स्पष्टम्'।

9. P. ब्रह्म-वैवर्ते।

10. KālaM. 2. KālaS. p. 232. VīraM. समय-प्रकाश, p. 141. SamayaM. p. 165. 11. P. No 'अयमर्थः'।

दर्शान्तश्चान्द्रो मासः[1], तन्मध्ये रवि-संक्रान्त्यभावे मल-मासो भवति। तथा च चतुर्दश्याममायां वा रवि-संक्रमणं ततः शुक्ल-प्रतिपदमारभ्य दर्शान्त-मासमतिक्रम्य प्रतिपदादौ रवि-संक्रमणं, तत्रासंक्रान्तो मासो मल[2]-मास-संज्ञक इति। *मलत्वञ्च कालाधिक्यात्। तथा च गृह्य-परिशिष्टे—"मलं वदन्ति कालस्य मासं काल-विदोऽधिकम्[3]" इति। कालाधिक्यञ्च विष्णुधर्मोत्तरे दर्शितम्—"सौरेणाब्दस्तु मानेन यदा भवति भार्गव। सावने तु तदा माने दिन-षट्कं[4] न पूर्यते॥ दिन-रात्रास्त्र ते राम प्रोक्ताः संवत्सरेण षट्। सौर-संवत्सरस्यान्ते मानेन शशिजेन तु। एका-दशातिरिच्यन्ते दिनानि भृगु-नन्दन॥ वर्ष-द्वये सार्ष्ट-मासे तस्मान्मासोऽतिरिच्यते। स चाधिमासकः प्रोक्तः काम्य-कर्मसु गर्हितः[5]॥" इति। सौर-संवत्सरः षड्भि-र्दिनैः सावनादतिरिच्यते, एकादशभिर्दिनैश्चान्द्रादतिरिच्यते। तथा च चान्द्र-संवत्सर-द्वयात् सौर-संवत्सर-द्वयं द्वाविंशत्या दिनैरधिकं भवति। अत ऊर्ध्वं सौर-मासाष्टकं चान्द्रमासाष्टकात् सार्धैः सप्तभिर्दिनैरतिरिच्यते। तथा च मिलित्वा दिनार्ध-न्यूनो मासो भवति। सोऽयमधिक-मास इति। अवशिष्ट-दिनार्ध-पूरणञ्च[6] यथोक्त-कालादूर्ध्वं षोडशभिर्दिनैः सम्पद्यते। अत एव सिद्धान्तेऽभिहितम्—"द्वात्रिंशद्भिर्गतैर्मासैर्दिनैः षोडशभिस्तथा। घटिकानां चतुष्केण पतति ह्यधि-मासकः[7]॥" इति।* "यस्मिन् मासे न संक्रान्तिः संक्रान्ति-द्वयमेव वा। मल-

1. P. add. r. उक्तः। 2. G- P. 'तत्रासंक्रान्ते मल०'।

*-*( l. 16.) KālaM. 2.

3. SmṛtiC. p. 107 and 183. "नेहेतात्र विशेषेण्यामन्यत्रावश्यकाद् विधेः"—other half. KālaM. 2. KālaV. p. 129. VīraM. समय-प्रकाश, p. 141. KālaS. p. 233. 4. P. 0षट्के।

5. KālaM. 2. KālaS. p. 233. v. r. दिनरात्रास्त्र।...सर्व-कर्मसु। MalaMT. p. 772. ll. 14-17, "सौर-संवत्सरस्यान्ते" इत्यादि।

6. G. 0पूर्तिश्च०।

7. KālaM. 2. SmṛtiK. p. 424. ll. 6-7. v. r. संपतत्यधिमासकः। KālaS. p. 233. v. r. पतत्येकोऽधिमासकः। SmṛtiC. p. 10 3. v. r. पतत्यधिक-मासकः। NirS. p. 7. ll. 6-7. v. r. पतत्यधिक-मासकः। SmṛtiSār. p. 159. VīraM. समय-प्रकाश, p. 152. v. r. पतत्येकोऽधिमासकः। SamayaM. p. 165-166, v. r. पतत्यधिक-मासकः। cf. MalaMT. p. 773, ll, 5-6,

मासः स विज्ञेयो मासे त्रिंशत्तमे भवेत्[1] ॥" इति काठक-वचनन्तु ज्योतिःशास्त्र-प्रसिद्ध-स्फुट-मानाभिप्रायम्, "द्वात्रिंशद्भिरि"ति वचनन्तु मध्यम-मानाभिप्राय-मिति न विरोधः। यद्यपि द्वात्रिंशन्मासेषु गतेषु योऽधिमासः स शुक्ल-प्रतिपदादि-दर्शान्तत्वाभावात् श्रौत-स्मार्त-कर्मानुपयुक्तः "इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्तितः। अग्नी-सोमौ स्मृतौ मध्ये समाप्तौ पितृ-सोमकौ॥ तमतिक्रम्य तु यदा रविर्गच्छेत् कदाचन। आद्यो[2] मलिम्लुचो ज्ञेयो द्वितीयः प्राकृतः स्मृतः[3] ॥" इति। अयमर्थः दर्श-पूर्णमास-याजिना शुक्ल-प्रतिपदि दर्शेष्टि-देवाविन्द्राग्नी हूयेते[4]। कृष्ण-प्रतिपदि तु पूर्णमासेष्टि-देवावग्नी-सोमौ। अमावास्यायां पिण्ड-पितृयज्ञ[5]-देवौ सोम-पितृकौ[6]। तत्रैवं सति शुक्ल-प्रतिपदादि-दर्शान्तो मासः संक्रान्ति-रहितोऽधिमास इत्यर्थाल्लभ्यत इति। तस्मान्मध्यम-मान-गणना श्रौत-स्मार्तयोर्नोपयुक्ता, दर्शान्त-द्वात्रिंशन्मासोत्तरं षोडश-दिनेषु गतेषु कृष्ण-द्वितीयायां मलमासोपक्रमात्। तथापि कालाधिक्य-मात्रे तदुदाहरणम्। 'त्रिंशत्तमे भवेदि'ति तु [7]धर्मशास्त्रोपयोगीति बोध्यम्। यद्यपि न्यूनाधिक-संख्याया अपि दर्शनान्न त्रिंशत्तमत्व-नियमः। तथापि त्रिंश-त्तमत्वस्योप[7]लक्षणत्वान्न दोषः। सोऽन्तर्भवतीति, उत्तर-मास-शेष इत्यर्थः।

---

1. KālaM. 2. SmṛtiK. p. 423, ll. 29-30. KālaS. p. 234. SmṛtiC, p. 104. MalaMT. p. 782, ll. 9-11. SmṛtiSār. p. 158. NirS. p. 7, ll. 3-4, v. r. मासः स्यात्तु त्रयोदशः। Op. cit. ll. 9-10. ViraM. समय-प्रकाश, p. 140, v. r. मासः स्यात्तु त्रयोदशः। SamayaM. p. 165, v. r. मासः स्यात्तु त्रयोदशः।

2. P. अथो (?)।

3. KālaM. 2. KālaS. p. 234. MalaMT. p. 768, ll. 10-12, v. r. रविर्यदा गच्छेत् कथञ्चन। Śraddha T. p. 253, ll. 17-19, v. r. रविर्यदा गच्छेत् कथञ्चन। SmṛtiC. p. 105, v. r चान्यस्मिन् मासे गच्छेत् कदाचन। Smṛti-Sār, p. 159. SmṛtiK. p. 424, ll. 12-14. VīraM. समय-प्रकाश, p. 141, v. r. रविर्यदि गच्छेत् कथञ्चन।

4. G. इन्द्राग्नी इयेते ; P. ०विन्द्राग्नी हूयते।

5 P. ०यज्ञक० Q. ०यज्ञे। 6. P. पितृ-गणौ।

7-7. (l. 15.) P. No 'धर्म···त्वस्योप०'

तथा च ज्योतिषे "षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः। पूर्वमर्धं परित्यज्य कर्तव्या चोत्तरे क्रिया[1] ॥" इति। तथा "आद्यो मलिम्लुचो ज्ञेयो द्वितीयः प्राकृत" इति च। एवञ्च यदा पूर्णिमान्त-चैत्र-कृष्ण-चतुर्दश्यां दर्शे वा मीन-संक्रान्तिस्ततः शुक्ल-प्रतिपदमारभ्य अग्रिम-दर्श-पर्यन्तं न संक्रान्तिः, किन्तु तदुत्तर-प्रतिपदि द्वितीयायां वा मेष-संक्रान्तिस्तत्र शुक्ल-प्रतिपदादि-दर्शान्तश्चैत्रोऽसंक्रान्तो मल-मास इत्यधिक-मास इति चाख्यायते[2]। एवं वैशाखादिष्वपि[3] ज्ञेयम् ॥ १८ ॥

असंक्रान्ताविति। एकस्मिन् वर्षे चेद् द्वावसंक्रान्तौ भवतः तदा तयोर्मध्ये आदिमः प्रथमः संसर्प-संज्ञः। तत्र[4] द्वयोरसंक्रान्तयोर्मध्ये संक्रान्ति-द्वय-युक्तः [यः] स च क्षय-मास-संज्ञकः, अंहस्पति-संज्ञकश्च भवति। एवं कार्त्तिकादि-मास-त्रय[5] एव क्षय-मासो[6] नान्यत्र। तदुत्तरं चापरोऽसंक्रान्तो भवति। अत्र द्वि-संक्रान्ति-युक्तस्य क्षय-संज्ञायां हेतु[5]रुच्यते। यदा धनुस्थे रवौ दर्श-समाप्तिस्तदा तस्य "मेषादिस्थे [7]सवितरि यो यो मासः प्रपूर्यते चान्द्रः। चैत्राद्यः स ज्ञेयः[7]" इति वचनेन मार्गशीर्षत्वं[8] प्राप्तम्। यदा त्वेकस्मिन्नेव मासे शुक्ल-प्रतिपदि धनुःसंक्रान्तिस्तत ऊर्ध्वं दर्शे मकर-संक्रान्तिः स मासो द्वि-संक्रान्तिः क्षयाख्यः। तत्र धनुस्थे रवौ दर्शो न समाप्तः, मकरस्थे तु समाप्तः, अतः पौष-मासत्वं तस्य संपन्नम्। तथा च मार्गशीर्षस्य तत्र लुप्तत्वात् क्षय-संज्ञा युक्तेति। तदुक्तं ज्योतिषे[9] "असंक्रान्ति-मासोऽधिमासः स्फुटः स्याद् द्वि-संक्रान्ति-मासः क्षयाख्यः

---

1, KālaM. 2. SmṛtiC. p. 101, v. r. पूर्वार्धन्तु…। उत्तरे क्रियाः। SmṛtiK. p. 425, ll. 3-5, VīraM. समय-प्रकाश, p. 141.

2. G- P. व्याख्यायते। 3. P. Q. add. r. 'च'।

4. G. अत्र। 5. G. ०त्रयमास। 5-5. (l. 12.) P. संज्ञा-हेतु०।

6. G. No 'क्षय०'। 7-7. G. No सवितरि…ज्ञेयः।

7. KālaM. 2. KālaTV. p. 355. VīraM. समय-प्रकाश, p. 143, v. r. चैत्रादिः स तु। MalaMT. p. 781. ll. 14-16 v. r. चैत्रादिः स तु विज्ञेयः। SmṛtiK. p. 425. ll. 5--7.

8. G. add. r. च। 9. P. ज्योतिःशास्त्रे।

कदाचित्[1]। क्षयः कार्त्तिकादि-त्रये नान्यतः स्यात् तदा वर्ष-मध्ये ऽधिमास-द्वयञ्चे"ति[2] ॥ यदा चामान्त-मानेन भाद्रपदामावास्यायां कन्या-संक्रान्तिरूर्द्ध्वमसंक्रान्त-मास[3]मतीत्योत्तरयोर्मासयोः क्रमेण तुला-वृश्चिक-संक्रान्ती भवतः, तत ऊर्ध्वमेकस्मिन्नेव मासे शुक्ल-प्रतिपदि धनुःसंक्रान्तिस्तदनन्तर-दर्शे मकर-संक्रान्तिः स क्षय-मासः। तत ऊर्ध्वं कुम्भ-संक्रान्तिरमावस्यायां, तत ऊर्ध्वमेकमसंक्रान्ति-मासमतीत्य शुक्ल-प्रतिपदि मीन-संक्रान्तिः। एवं सति एकस्मिन्नेव वत्सरे द्वावसंक्रान्तौ मासौ एकश्च मध्ये द्वि-संक्रान्त-मास इति यथोक्त-मास-त्रय-संपत्तिर्बोध्या ॥ १८ ॥

**त्रयस्त्याज्या** इति। विवाहादौ शुभ-कार्ये त्रयोऽप्येते वर्जनीयाः। तदुक्तं ज्योतिषे "यस्मिन् मासे न संक्रान्तिः संक्रान्ति-द्वयमेव वा। संसर्पांहस्पती मासावधिमासश्च निन्दिताः[4] ॥" इति। अत्र विशेषमाह—संसर्पेति[5]। संसर्पः प्रथमासंक्रान्तः, अंहस्पतिः क्षय-मासः। एतौ[6] द्वौ श्रौते स्मार्ते च कर्मणि शुद्धौ, ग्राह्यावित्यर्थः॥ तदुक्तं "मास-द्वयेऽब्द-मध्ये तु संक्रान्तिर्न यदा भवेत्। प्राकृतस्तत्र पूर्वः स्यादधिमासस्तथोत्तरः"[7] इति॥ 'प्राकृतः' शुद्धः। अत एव सम्यक् सर्पति कर्मस्विति योगात् संसर्प-संज्ञा। एवं क्षय-मासोऽपि। तत्र प्राप्तस्य कर्मणोऽन्यत्रासम्भवात् तत्र कर्मणि श्राद्धादौ शुद्ध एव। ननु क्षय-मास एक-मास-लोपात् कथं तत्प्रयुक्त-कर्मानुष्ठानम्, कथं च "द्वादश-मासाः संवत्सर" इत्ययं नियम इति चेत्,[8] उच्यते "[9]यत्र मासि रवि-संक्रम-द्वयं तत्र मास-युगलं

---

1. P. प्रदिष्टः।

2. Q. ०द्वयं चेत्। KālaM. 2. Kāl S. p. 234-36. MalaMT. p. p. 781. ll. 23-26. v. r. असंक्रान्त०। द्वि-संक्रान्त०। SmṛtiSār. p. 151. Nir. p. 7. ll. 10-12. VīraM. द्वि-संक्रान्त०। SamayaM. p. 166. S'rāddhaT. p. 253, v. r. असंक्रान्त०। द्विसंक्रान्त०। 3. P. No 'मास'।

4. KālaM. 2. KālaS. p. 226, v. r. निन्दितः। SmṛtiC. p. 104. VīraM. समय-प्रकाश. p. 143. v. r. एतावधिमासश्च। MalaMT. p. 782. ll. 16-17.

5. P. No 'संसर्पेति'। 6. G. No 'एतौ'।

7. NirS. p. 7. ll. 13-14. SmṛtiSār. p. 160. MalaMT. p. 776. ll. 14-15. v. r. मास-द्वयस्य मध्ये तु। प्रकृतस्तत्र। SmṛtiC. p. 140.

8. Q. No 'चेत्'।

9-9. (p. 105, l. 1.) Q. No. यत्र मासि ...क्षयस्योच्यते।

क्षयात्मक"मिति[1] मास-द्वयात्मकत्वम् एकस्यैव क्षयस्योच्यते[9]। तथा वचनान्तरं "द्वे संक्रान्ती क्षयः स्यात् स एकोऽपि द्व्यात्मको भवेदि"ति॥ तत्र चैवं व्यवस्थोक्ता, "तिथ्यर्धं प्रथमे पूर्वो द्वितीयेऽर्द्धे तदुत्तरः। मासाविति बुधैश्चिन्त्यौ क्षय-मासस्य मध्यगावि"ति[2] ॥ २० ॥

इदानीं मल-मासे कार्याकार्य-निर्णयः क्रियते **काम्यारम्भमि**त्यादिना। अत एव पैठीनसिः "श्रौत-स्मार्त-क्रियाः सर्वा द्वादशे मासि कीर्तिताः। त्रयोदशे तु सर्वास्ता निष्फला इति कीर्तिताः[3] ॥" स्मृत्यन्तरेऽपि "इष्टयादि-सर्वं-काम्यन्तु मल-मासे विवर्जये"दिति[4]। अयञ्च निषेध आरम्भ-समाप्ति-विषयः, "असूर्या नाम ये मासा न तेषु मम सम्मताः। व्रतानां चैव यज्ञानामारम्भस्य समाप्तयः ॥"[5] इति। पूर्वमारब्धन्तु कृच्छ्रादि मलमासेऽपि समापनीयमित्याह **आरब्धमिति**। तत्र हेतुमाह सावनस्येति। द्वादशाहोरात्र-मितत्वात् कृच्छ्रस्य मध्ये विरामायोगादिति भावः ॥ २१ ॥

आरम्भ-समाप्त्योर्मध्यपातिन्यधिमासेऽपि कर्म कार्यमित्याह **आरम्भस्ये**ति। तथा च स्मृतिः "अधिमास-निपातेऽपि ह्येष एव विधि-क्रम"[6] इति। काम्यस्यापि क्वचित् कर्तव्यतामाह[7] **कारीर्यादी**ति। "कारीर्यां वृष्टिकामो यजेते"ति विहिता

---

1. ViraM. p. 143.

2. KālaM. 2. MalaMT. p. 779. ll. 24-26. SmṛtiK. p. 432. ll. 2-3. Nir. p. ll. 9-10. KālaS. p. 237. SamayaM. p. 172. ViraM. p. 155.

3. KālaM. 2. KālaS. p. 237. ViraM. समय प्रकाश, p. 144. v. r. तस्मात् त्रयोदशे मासि निष्फलास्ताः प्रकीर्तिताः।

4. KālaM. 2. KālaS. p. 238. ViraM. समय प्रकाश p. 146.

5. KālaM. 2. KālaS. p. 238. ViraM. समय प्रकाश p. 148. v. r. समापनम्। SmṛtiK. p. 4-7. ll. 10-12.

6. KālaM. 2. v. r. अधिमासे निपतिते। KālaS. p. 238. v. r. अधिमासे निपतितेऽप्येष। KālaV. p. 195. v. r. अधिमासेऽपि पतिते एष एव विधिः स्मृतः। ViraM. समय-प्रकाश, p. 148.

7. G. कर्तव्यतायां।

कारीरी-संज्ञकेष्टिस्तदारम्भ-समापने मलमासेऽपि कर्तव्ये, शुद्ध-मास-प्रतीक्षायां चेत्र-शुष्कता-प्रसङ्गात्। अत एव काठक-गृह्ये "मलेऽनन्य-गतिं कुर्यान्नित्यां नैमित्तिकीं क्रियामि"ति[1] ॥ 'नित्या' अग्निहोत्रादि-रूपा, 'नैमित्तिकी' ग्रहण-स्नानादि-रूपा। तदुक्तं गृह्य-परिशिष्टे "[2]अवषट्कार-होमाश्च पर्व चाग्रयणं तथा। मलमासेऽपि कर्तव्याः काम्या इष्टीर्विवर्जयेदि"ति[2] ॥ 'अवषट्कार-होमा' अग्नि-होत्रौपासन-वैश्वदेवादयः, 'पर्व' दर्श-पूर्णमासौ पार्वणस्थालीपाकश्च। दर्शादीनां नित्यत्वमकरणे प्रत्यवायादवगन्तव्यम् ॥ २३ ॥

नित्येति पूर्वोक्त-कामरस्यापुत्रपलक्षणम्, अनन्य-गतिकत्वस्य तुल्यत्वात्। अनन्य-गतिकानि नैमित्तिकान्याह यमः "चन्द्र-सूर्य-ग्रहे स्नानं श्राद्ध-दान-जपा-दिकम्। कार्याणि मलमासेऽपि नित्यं नैमित्तिकं तथे"ति[3] ॥ एवं सति सगतिकं नित्य-नैमित्तिकमेव वर्जनीयमित्याह **गत्यन्तर-युत**मिति। सोम यागो हि[4] वसन्ते विहितः। वसन्तश्च मलमास-वर्जनेऽपि शुद्ध-मासे सम्भवतीति सगति-कत्वम्। तथा च काठक-गृह्ये "सोम-यागादि-कर्माणि नित्यान्यपि मलिम्लुचे। षष्ठोन्याग्रयणाधान-चातुर्मास्यादिकान्यपि ॥ महालयाष्टका-श्राद्धोपाकर्माद्यपि कर्म

---

1. KālaM. 2. NirS. p. 8. l. 5. SmṛtiSār. p. 160. MadanaP. p. 547. KālaS. p. 239. v. r. मलमासेऽनन्य-गतिं कुर्यान्नैमित्तिकीं। VīraM. समय प्रकाश, p. 144. MalaMT. p. 788. ll. 7-8. मलेऽनन्य०।

2-2. P. No 'अवषट्…विवर्जयेदिति'।

2. KālaM. 2. v. r. मल-मासे तु कर्तव्यं। KālaS. p. 239. v. r. कर्तव्यं मल…। SmṛtiSār. p. 161. v. r. मल-मासे तु कर्तव्यं। SmṛtiC. p. 107. v. r. मल-मासे तु कर्तव्यं; third line omitted. MadanaP. p. 545, v. r. कर्तव्यं। VīraM. समय-प्रकाश, p. 145, v. r. कर्तव्यं… इष्टीश्च…। SamayaM. p. 168. v. r. कर्तव्यं…इष्टीश्च…।

3. KālaM. 2. KālaS. p. 240. v. r. मलमासे तु। S'rāddhaT. p. 233. ll. 5-7. v. r. श्राद्धं दानं तथा जपः। VīraM. समय-प्रकाश, p. 145. SmṛtiC. p. 108. MalaMT. p. 739. ll. 9-10. v. r. श्राद्धं दानं तथा जपं।

4. P. सोम-यागादि।

यत्। स्पष्ट-मास-विशेषाख्या-विहितं वर्जयेन्मले[1] ॥ इति। 'षष्ठीष्टि:' काठक-शाखादौ प्रसिद्धा[2] ॥ २४ ॥

जातेष्टिर्गति-संयुतेति। जातेष्टिर्जननानन्तरं विहिता, जात-कर्मानन्तरं च स्तन-प्राशनम्, न ततः पूर्वम्। एवञ्च प्रथमं जातेष्टिस्ततो जात-कर्म ततः स्तन-प्राशनमिति बाल-विपत्ति-शङ्का स्यादतः शेषि-विरोधाज्जातेष्टिर्जात-कर्मानन्तरं भवति। एवञ्च निमित्तानन्तर्य-बाधस्याविशेषादाशौचापगमे कार्या। एवं पर्व-काल-ग्रहणार्थं[3] तत्प्रतीक्षापि। तथा शुद्ध-मास-प्रतीक्षयाऽपि क्रियमाणा न दुष्यतीति सगतिकत्वं द्रष्टव्यम्। आग्रयणस्य च[4] पुराणान्न-लाभे सगतिकत्वं, तदलाभे अगतिकत्वम्। नित्यवदिति। यथा नित्यमगतिकं कार्यं सगतिकं न कार्यं, तथा नैमित्तिकमपीत्यर्थः। एवञ्च आवश्यकं काम्यम् अनन्य-गतिके नित्य-नैमित्तिके मलमासे कार्यं नेतराणीति वर्ज्यावर्ज्य-विवेकः सम्पन्नः ॥

तत्र कार्याणि (?) कालादर्शे दर्शितानि। "द्वादशाह-सपिण्डान्तं कर्म ग्रहण-जन्मनोः। सीमन्ते पुंसवे श्राद्धं द्वावेतौ जात-कर्म च ॥" 'श्राद्धं' नान्दी-श्राद्धम्, 'द्वावेतौ' सीमन्त-पुंसवौ। "रोगे शान्तिरलभ्ये च योगे श्राद्धं व्रतानि च। प्राय-श्चित्त-निमित्तस्य वशात् पूर्वं परत्र च ॥ अब्दोदकुम्भ-मन्वादि-महालय-युगा-दिषु। श्राद्धं दर्शेऽप्यहरहः श्राद्धं न्यूनादि[5]-मासिकम् ॥ मलिम्लुचान्य-मासेषु मृतानां श्राद्धमाब्दिकम्। श्राद्धन्तु पूर्व-दृष्टेषु तीर्थेष्वेव युगादिषु ॥ मन्वादिषु च यद्दानं दानं दैनन्दिनञ्च यत्। तिल-गो-भू-हिरण्यानां सन्ध्योपासनयोः क्रिया ॥ पर्व-होमाश्चाऽऽग्रयणं साम्नेरिष्टिश्च[6] पर्वणोः। नित्याग्निहोत्र-होमश्च देवतातिथि-पूजनम् ॥ स्नानं च स्नान-विधिनाऽप्यभक्ष्यापेय-वर्जनम्। तर्पणञ्चानिमित्तस्य नित्यत्वादुभयत्र च ॥ अनित्यमनिमित्तञ्च दानञ्च[7] महदादिकम्। 'महदादिकं'

---

1. KālaM. 2. SmṛtiSār. p. 162. KālaS. p. 239. v. r. स्व-स्व-मास-विशेषस्य विहितं। ViraM. समय-प्रकाश, p. 148, v. r. पुत्रेष्ट्याग्र॰। SamayaM. 167. MadanaP. p. 547 and MalaMT. p 783, ll. 25-26; only the second verse.

2. G. No 'षष्ठीष्टिः...प्रसिद्धा'। 3. P. Q. पर्व-कालानुग्रहार्थं।

4. G. No 'च'। 5. P. न्यूनाधि॰। 6. P. साम्नेरिष्ठञ्च।

7. P. दानं यद्।

षोडश महादानानि[1]। अन्व्याधानाध्वरापूर्व-तीर्थ-यात्रामरेक्षणम् ॥ देवाराम-तडागादि-प्रतिष्ठा मौञ्जि-बन्धनम्। आश्रम-स्वीकृतिः काम्य-वृषोत्सर्गश्च निष्क्रमः॥ राजाभिषेकः[2] प्रथमश्चूडा-कर्म व्रतानि च। अन्नप्राशनमारम्भो गृहाणाञ्च प्रवेशनम् ॥ स्नानं विवाहो नामातिपन्नं देव-महोत्सवम्। व्रतारम्भ-समाप्ती चा[3] काम्यं काम्यञ्च पाप्मनाम् ॥ प्रायश्चित्तन्तु सर्वस्य मलमासे विवर्जयेत् ॥ उपा-कर्मोत्सर्जनञ्च पवित्र-दमनार्पणम्। अवरोहश्च हैमन्तः सर्पाणां बलिरष्टकाः॥ ईशानस्य बलिर्विष्णोः शयनं परिवर्तनम्। दुर्गेन्द्र-स्थापनोत्थाने ध्वजोत्थानञ्च वज्रिणः। पूर्वत्र प्रतिषिद्धानि परत्रान्यच्च दैविकम्[4] ॥"

इति। अत्र च "द्वादशाहे"त्यारभ्य "नित्यत्वादुभयत्र चे"त्यन्तेन ग्रन्थेन कर्तव्य-संग्रहः "अनित्यमनिमित्तञ्चे"त्यारभ्य "वर्जयेदि"त्यन्तेन वर्ज्य-संग्रहः॥ "उपाकर्मे"त्यारभ्य "परत्रान्यच्च दैविकमि"त्यन्तेन मलमासे वर्जितानां सतां शुद्ध-मासे अवश्य-कर्तव्यत्वेन[5] संग्रहः॥ अत्र सर्वत्र साक्षि-वचनान्युदाहरामः॥ यमः—"गर्भे वार्द्धुषिके भृत्ये श्राद्ध-कर्मणि मासिके। सपिण्डीकरणे नित्ये[6] नाधिमासं विवर्जयेत् ॥ तीर्थ-स्नानं जपो होमो यव-व्रीहि-तिलादिभिः। जात-कर्मान्त्य-कर्माणि नव-श्राद्धं तथैव च॥ मघा-त्रयोदशी-श्राद्धं श्राद्धान्यपि च षोडश। चन्द्र-सूर्य-ग्रहे स्नानं श्राद्ध-दान-जपादिकम्। कार्याणि मलमासेऽपि नित्यं नैमित्तिकन्तथा[7] ॥" 'मासिके श्राद्ध-कर्मणि' अमावास्या-श्राद्ध-कर्मणीत्यर्थः। 'नित्ये' नित्य-दाने[8]। 'होमो'ऽत्रौपासन-होमः। 'अन्त्य-कर्माणि' दहनोदक-पिण्ड-दानास्थि-सञ्चयनादीनि। स्मृत्यन्तरे "श्राद्ध-जातक[8]-नामानि ये च संस्कार-

---

1. P. Q. °दानादि।

2. Q. राज्याभिषेकः। 3. G. समाप्तिश्चा°।

4. द्वादशाह-सपिण्डान्तं···परत्रान्यच्च दैविकम्—KālaM. 2. NirS. p. 8 .ll. 8-15. (द्वादशाह-सपिण्डान्तं···नित्यत्वादुभयत्र च)। p. 10. l. 25—p. 11. l. 4. (अनित्यमनिमित्तञ्च···परत्रान्यच्च दैविकम्)।

5. P. Q. कर्तव्यत्वं। 6. P. नित्यं।

7. KālaM. 2. SmṛtiSār. p. 160. SmṛtiK. p. 430. ll 27. SmṛtiC. p. 108. MadanaP. p. 546. VīraM. समय-प्रकाश, p. 145.

8. P. No 'नित्ये नित्य-दाने'। 8. R. °जन्मक°।

सव्रताः। मलिम्लुचेऽपि कर्तव्या इष्टीः काम्याश्च वर्जयेदि"ति[1] ॥ 'संस्काराः' अन्नप्राशन-निष्क्रमणादयः। 'सव्रताः' चातुर्मास्यादयः। गभस्तिः "एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते। तत् कार्यं पूर्व-मासे च कालाधिक्ये च धर्मतः[2] ॥" इति। मरीचिः "रोगे[3] चालभ्य-योगे च सीमन्ते पुंसवेऽपि च। यद्ददाति समुद्दिष्टं पूर्वत्रापि न दुष्यती"ति[4]। ननु संग्रह-वचने महालय-श्राद्धस्यापि उभयत्र कर्तव्यतोक्ता "महालय-युगादिष्वि"त्युक्तेः। सा च[5] वचनान्तर-विरुद्धा। "महालयाष्टका-श्राद्धोपाकर्माद्यपि कर्म यत्। स्पष्ट-मास-विशेषाख्या-विहितं वर्जयेन्मले।" इति निषेधात्। नागर-खण्डेऽपि, "नभो वाथ नभस्यो वा मलमासो यदा भवेत्। सप्तमः पितृ-पक्षः स्यादन्यत्रैव तु पञ्चमः[6] ॥" इति। अत्र सप्तम-पञ्चमौ आषाढीमवधिं कृत्वा द्रष्टव्यौ। नायं दोषः। तत्र[7] महालय-शब्देन तीर्थ-विशेषस्य विवक्षितत्वात् ॥ २५ ॥

**शुद्ध-मास-मृतानामिति** ॥ तथा च हारीतः "असंक्रान्ते हि कर्तव्य-माब्दिकं प्रथमं द्विजैरि"ति[8]। तथा "प्रत्यब्दं द्वादशे मासि कार्या पिण्ड-क्रिया सुतैः। क्वचित् त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरमि"ति[9] ॥ अत्र द्वादशे मासि

---

1. KālaM. 2. SmṛtiC. pp. 109 and 113. KālaS. p. 240. "स्मृतिसंग्रहे" MalaMT. p. 789. ll. 19-21. VīraM. समय-प्रकाश, p. 147.

2. KālaM. 7 KālaS. p. 411. SmṛtiC p 111. KālaV. p. 141

3. P. योगे।

4 KālaM. 2. SmṛtiSār, p. 161. SmṛtiK. p. 430, ll. 19-20. KālaS. p. 241. S'rāddhaT. p. 343, ll. 21-22. VīraM. समय-प्रकाश, p. 145.

5. P. No 'च'।

6. KālaM. 2. KālaS. p. 243. S'rāddhaM. p. 17. S'rāddhaT. p. 256.

7. P. अत्र।

8. KālaM. 2. KālaS. p. 421. S'rāddhaC. p. 69 SmrtiSār. p. 162. ll. 14-15. SmṛtiK. p. 428, l. 21. SmṛtiC. p. 115. S'rāddhaT. p. 28. ll. 21-22 and p. 253, ll. 8-10. MalaMT. p. 848, ll. 13-14. MadanaP. p. 548, "वशिष्ठः"। VīraM. समय-प्रकाश, p 151. CaturVC. काल-निर्णय, p 57, "वृद्ध-वशिष्ठः"।

9. KālaM. 2. S'rāddhaC. p. 69. SmṛtiC. p. 115. KālaS. p. 244. SmrtiK.

पूर्णे सति अनन्तर-दिने कार्यमिति व्याख्येयम्, एवं त्रयोदश इत्यत्रापि, आब्दिक-तिथेर्द्वितीय-वर्षादाविव सम्भवात्। "मास-पक्ष-तिथि-स्पृष्टे यो यस्मिन् म्रियतेऽहनि। प्रत्यब्दन्तु तथाभूतं क्षयाहं तस्य तं विदुरि"ति[1] व्यास-वचनात्। तस्माच्छुद्ध-मास-मृतानां प्रथमाब्दिकं मल एव कार्यम्, द्वितीयाद्याब्दिकं तु शुद्ध एवेति व्यवस्थयोभयत्र कर्तव्यता ज्ञेया। **मलमास-मृतानामिति**[2] मल-मृतानान्तु यदि कदाचित् स[3] एव मल-मास आगतस्तदा तत्रैव प्रत्याब्दिकं मल-मासे कर्तव्यं न तूपरितने शुद्ध-मासे[4]। तथा च भृगुः "मल-मास-मृतानान्तु यच्छ्राद्धं प्रतिवत्सरम्। मलमासे तु तत् कार्यं नान्येषान्तु कदाचने"ति[5]। तथा "मलमास-मृतानां तु[6] सौरं मानं समाश्रयेत्। स एव दिवसस्तस्य श्राद्ध-पिण्डोदकादिष्वि"ति। तदेवं किञ्चित् मलमास एव कार्यं, यथा शुद्ध-मास-मृतानां प्रथमाब्दिकं, मलमासे मृतानामाब्दिकान्तरम्। किञ्चित्[7] शुद्ध एव, यथोपा[8]कर्मादि सामगातिरिक्तानाम्[9], सामगानान्तु मल एव, सिंहस्थे रवौ तद्विधानात्। "सिंहे रवौ तु पुष्यर्क्षे पूर्वाह्णे विचरेद्बहिः। छन्दोगा मिलिताः कुर्युरुत्सर्गं सर्वछन्दसाम्॥ शुक्लपक्षे तु हस्तेन उपाकर्मापराह्णिकमि"ति [10] गार्ग्य-

---

p. 425. ll. 5-6. S´räddhaT. p. 280, ll. 16-18. NirS. p. 37, ll. 1-2. CaturVC. काल-निर्णय, p. 61. VïraM. समय-प्रकाश, p. 152.

1 KālaM. 2. KālaS. p. 378, v. r. तद्विदुः। KālaTV. p. 409. S´räddhaM. p. 23. S´räddhaC. p. 68. SmṛtiC. p. 114, 118. MadanaP. p. 506. VïraM. समय-प्रकाश, p. 187. CaturVC. काल-निर्णय, p 56

2. G. Q. No. 'मल-मास-मृतानामिति'। 3. G. No 'स'। 4. B. ०मासि।

5. MadanaP. p. 348. SamyaM. p. 171. S´räddhaC. p. 70. SmṛtiSär. p. 161. CaturVC. काल-निर्णय, p. 428, ll. 17-18. SmṛtiC. श्राद्ध-काण्ड. p. 114.

6. C. No 'तु'। 7. G. केचित्तु (?)। 8. P. यदुपा०।

9. P. सामगातिरिक्त-विषयम्।

10. VïraM. समय-प्रकाश, p. 94, 97, 99. KālaV. p. 277. SamayaM. p. 107. SmṛtiK. p 73, ll. 27-28. CaturVC. कालनिर्णय, p 397. SmṛtiS. p. 228, ll. 2-3. MadanaP. p. 86, 92. KālaTV. p. 224. NirS. p. 91, "पूर्वाह्णे ऽविचरे" अविचरे

वचनात् ॥ [1]प्रथमोपाकरणन्तु तेषामपि मले निषिद्धम्, "प्रथमोपाकृतिर्न स्यात् कृतं कर्म[2] विनाशकृदिति वचनात्[1] ॥ एवं च "दशहरासु नोत्कर्षस्तत्स्वपि युगादिषु। उपाकर्म-महाषष्ठ्योर्हरतदुक्तं वृषादितः[3] ॥" इति वचने उपाकर्मणो[4]-ऽनुत्कर्षाभिधानं सामग-विषयमेव ज्ञेयम्। प्रकृतमनुसरामः। किञ्चिदुभयत्रापि कार्यं यथाऽब्दोदकुम्भादि। किञ्चिदन्यतरस्मिन्निमित्त-वशात् कर्तव्यं, यथा द्वादशाह-सपिण्डीकरणादि। किञ्चित् मल-मासे वर्ज्यं, यथा "अनित्यमनिमित्तं चे"त्यादीति संक्षेपः ॥

**दैव** इति। दैवे यागादि-कर्मणि शुक्ल-पक्षः प्रशस्तः। "यं कामयेत वसीयान् स्यादिति, तं पूर्व-पक्षे याजयेद् वसीयानेव भवती"ति श्रुतेः। 'वसीयान्' वसुमत्तरः। पित्र्ये कर्मणि तु कृष्ण-पक्षः प्रशस्तः, "[5]यथा चैवापरः पक्षः पूर्व-पक्षाद्विशिष्यते। तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते ॥" इति मनु[6]-वचनात् ॥ २६ ॥

इति संवत्सर-प्रकरणम्।

अथ प्रतिपत्-प्रकरणमारभ्यत इत्याह[5] **तृतीये त्विति** ॥ प्रथम-कला-निष्पत्ति-परिमितः कालः प्रतिपत् तिथिर्भवति। एवं द्वितीयादिष्वपि द्रष्टव्यम्। तथा च स्कान्दे "अमा षोडश-भागेन देवि प्रोक्ता महाकला। संस्थिता परमा माया देहिनां देहधारिणी ॥ अमादि-पौर्णमास्यन्ता या एव

---

ग्रहादि-दोष-हीने। 'विचरेदि'ति पाठोऽज्ञान-कृतः"। NirS. p. 92. ll, 1-2.

1-1. P. No प्रथमोपाकरणन्तु···दिति वचनात्। 2. G. कृत-कर्म।

3 KālaV. p. 145, 277 and 393, v. r. दशहरास्वनुत्कर्षः···उपाकर्मणि चोत्सर्गे तत् कर्तव्यम्। VīraM. समय-प्रकाश, p. 153. CaturVC. काल-निर्णय, p. 23. SamayaM. p. 108. SmṛtiK. p. 75, ll. 15-16. SmṛtiSār. p. 127. ll, 24-25. MadanaP. p. 86. KālaTV. p. 222,

4. P. नोपाकर्मणो॰।

5-5. P. यथा चैवापर-पक्ष पित्रा (?) इत्याह।

6. 3, 278. KālaM, 3.

शशिनः कलाः। तिथयस्ताः समाख्याताः षोडशैव वरानने[1] ॥" इति। अयमर्थः, या महामाया आधार-शक्ति-रूपा[2]। 'देहिनां देहधारिणी संस्थिता,' सा चन्द्र-मण्डलस्य 'षोडश-भागेन' परिमिता चन्द्र-देहधारिणी 'अमा' नाम्नी[3] 'महाकले'ति प्रोक्ता। क्षयोदय-रहिता नित्या तिथि-संज्ञकैव। इतरा अपि पञ्चदश कला दिवस-व्यवहारोपयोगिन्यः क्षयोदयवत्यः पञ्चदश[4] तिथयो भवन्तीति तिथयः षोडशैवेत्यविरुद्धं वचनमि'ति। **शुक्ल-पक्ष** इति। वह्निना पीता प्रतिपत् कला शुक्ल-पक्षे चन्द्रं पुनः प्रविशति। कृष्ण-पक्षे च ततो विनिः-सरति[5]। वह्न्यादि-देवतानां कला-पानं सोमोत्पत्तौ पठ्यते। "प्रथमां पिबते वह्निर्द्वितीयां पिबते रविरि"त्यादि-"पञ्चदशीं प्रजापतिरि"त्यन्तेन[6] ॥ २७ ॥

इदानीं सर्व-तिथि-साधारणी परिभाषोच्यते **शुद्धे**ति। शुद्धा विद्धा चेति तिथिर्द्विधा[7], अन्यया तिथ्या उदयास्तमयान्तराले रहिता[8] शुद्धेत्यर्थः। विद्धां लक्षयति **उदय** इति। सूर्योदये पूर्वया तिथ्या त्रिमुहूर्त-मितया उत्तरा तिथि-र्विध्यते। तथा सायं त्रि-मुहूर्त-मितया उत्तरया विध्यते। न तु न्यूनयेत्यर्थः। **विध्यापी**ति। त्रिमुहूर्त-परिमितैव दिने विद्यमाना विद्धा भवति, न न्यूनेत्यर्थः[9] ॥ तथाच पैठीनसिः "पक्ष-द्वयेऽपि तिथयस्तिथिं पूर्वां तथोत्तराम्। त्रिभिर्मुहूर्तै-र्विध्यन्ते सामान्योऽयं विधिः स्मृत" इति[10] ॥ "उदिते दैवतं भानौ पित्र्यं चास्तमिते रवौ। द्वि-मुहूर्तं त्रिरह्नश्च सा तिथिर्हव्य-कव्ययोरि'ति विष्णुधर्मोत्तर-[11]वचनात्। 'अह्नः' सम्बन्धि 'द्वि-मुहूर्तं' त्रि-मुहूर्तं चेत्यन्वयः[12]। 'दैवतं' दैव-कर्मयोग्यं, 'पित्र्यं' पितृ-कर्म-योग्यम्। अतः 'सा तिथिः' क्रमेण 'हव्य-कव्ययो'र्ग्राह्येत्यर्थः[13]। द्वि-मुहूर्तम् इत्यनुकल्पः। तथा "पौर्वाह्णिकास्तु तिथयो दैवे कार्ये प्रयत्नतः"।

---

1. KālaM. 3. KālaTV, p. 1
2. P. ०भूता। 3. Q. ०नाम्नीति। 4. P. No. पञ्चदश।
5. P. निःसरति। 6. KālaS. p. 43. KālaM. 3
7. P. द्विविधा तिथिः। 8. G. No 'रहिता'। 9. G उभयेत्यर्थः।
10. KālaM. 3. NirS. p. 13, ll. 3-4, v. r. विध्यन्ति। KālaTV. p. 17
11. P. विष्णुपुराणोक्त०। KālaM. 3. NirS. p. 13, ll 5-6. KālaTV. p. 15.
12. G. No 'चेत्यन्वयः'; P, चेत्यर्थः। 13. G. ०ग्राह्य इत्यर्थः।

इति वृद्ध-याज्ञवल्क्य-वचनादपि त्रि-मुहूर्त-सत्त्वमावश्यकम्। पूर्वाह्ण-शब्दस्य अह्नः पूर्वो भाग इति व्युत्पत्त्या दिनाद्य-भाग-वचनत्वात्तस्य च पञ्चधा विभागे त्रि-मुहूर्तात्मकत्वात्[1] ॥२८-२९॥

**शुद्धायामिति**। दिन-द्वये सत्वे हि सन्देहः, तदभावान्न सन्देह इत्यर्थः। व्रतमिति, [2]पूजादि-रूपमित्यर्थः। **एकोद्दिष्टमिति** एक-दैवत्यमित्यर्थः, पार्वणं त्रि-दैवतम्[3] ॥३०-३१॥

उपवासे प्रतिपन्निर्णयमाह **शुक्ल-पक्ष** इति। तथा च पैठीनसिः "पञ्चमी सप्तमी चैव दशमी च त्रयोदशी। प्रतिपन्नवमी चैव कर्तव्या संमुखी तिथिः[4] ॥" संमुखत्वञ्च स्कन्द-पुराणे विवेचितम्, "संमुखी नाम सायाह्नव्यापिनी दृश्यते यदा। प्रतिपत् संमुखी कार्या या भवेदापराह्णिकी[5] ॥" व्यासोऽपि "प्रतिपत् सैव विज्ञेया या[6] भवेदापराह्णिकी। दैवं कर्म तदा ज्ञेयं पित्र्यं वा मनुरब्रवीत्[7] ॥" ॥३२॥

सायाह्नादयः सावन-दिवसस्य भाग-विशेषा इत्याह[8] **प्रातरिति**। मुख्यः श्रेष्ठः। द्वित्रादीति। द्विधा त्रेधा चतुर्धेति भागेभ्यश्च इत्यर्थः। [9]तथा च सूर्योदय-मारभ्य मुहूर्त-त्रयं प्रातर्भागः, तदूर्ध्वं मुहूर्त-त्रयं संगवः ॥ ततो मुहूर्त-त्रयं[9] मध्याह्न-स्ततो मुहूर्त-त्रयं सायाह्नः। तथाच व्यासः[10] "मुहूर्त-त्रितयं प्रातस्तावानेव तु संगवः मध्याह्नस्त्रि-मुहूर्तः स्यादपराह्णोऽपि तादृशः। सायाह्नस्त्रि-मुहूर्तस्तु [11]सर्व-धर्म-

---

1. G. त्रि-मुहूर्तकत्वात्। 2. Q. add. r. व्रतं।
3. P. addr. इत्यर्थः।
4. KālaM. 3. KālaTV. p. 26. v. r. सप्तमी पञ्चमी। KālaS. p. 45.
5. KālaM. 3. NirS. p. 22. l. 7. KālaTV. p. 26. KālaS. p. 45.
6. G. No 'या'।
7. KālaM. 3. KālaTV. p. 27. v. r. तथा ज्ञेयं। KālaS. p. 49.
8. Q. इत्यत्राह।
9-9 P. 'ततो मुहूर्त-त्रयं प्रातस्तावानेव तु सङ्गवः।
10. G. पुस्तके 'तथा च व्यासः' इत्यन्तग्रन्थस्थाने "कर्मातिरिक्त-व्रतो-पवासादि सकल-कर्मणो ग्रहं दिष्ट न विवाहादि मङ्गलाङ्गभूत-श्राद्ध-व्यतिरिक्त-पार्वण-श्राद्धस्य वृद्धादाविव" इति वर्तते। (?)
11-11. (p. 114. l. 1.) G. सम्बन्धं मयाद्द क्षतमिति (?)।

बहिष्कृत[1] ॥" इति । मुहूर्त-शब्देनैव दिनस्य पञ्चदश-भाग उच्यते । तस्य च दिन-वृद्धि-ह्रासाभ्यां वृद्धि-ह्रासौ ज्ञेयौ । एवं सति यदा प्रतिपद्दर्श-दिने अस्तात् पूर्वं त्रि-मुहूर्त-परिमिता परेद्युरस्तमयात् प्राक् त्रि-मुहूर्तं प्रविष्टया द्वितीयया विद्धा भवति, तदा दर्श-विद्धा ग्राह्या ॥ सा च [2]पूर्व-दिने अपराह्णेऽपि यदि[3] वर्तते तदा श्रेष्ठा, तदभावे सायाह्न-मात्रव्यापिन्यपि ग्राह्येत्यर्थः । "आवर्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परः[4] ॥" इति स्कन्दपुराणे द्वेधा विभागो[5] दर्शितः । तथा, "ऊर्ध्वं सूर्योदयात् प्रोक्तं मुहूर्तानान्तु पञ्चकम् । पूर्वाह्णः प्रथमः प्रोक्तो मध्याह्नस्तु ततः परम्[6] । अपराह्णस्ततः प्रोक्तो मुहूर्तानान्तु पञ्चकमि"ति[7] ॥ त्रेधा विभागः । शातातपोऽपि "तस्मादह्नस्तु पूर्वाह्णे देवा अशनम् अभ्यवहरन्ति । मध्यन्दिने मनुष्याः । अपराह्णे पितरः" । इति । चतुर्धा विभागमाह गोभिलः "पूर्वाह्णः प्रहरं सार्धं मध्याह्नः प्रहरस्तथा । आ तृतीयादपराह्णः सायाह्नश्च ततः पर[8]" इति । एते च द्वेधा विभागादयो यत्र द्योतकं तत्रैव ग्राह्याः, अन्यत्र तु[9] सर्वत्र पञ्चधा विभाग एवेति । एवञ्च प्रकृते उपवासे प्रतिपत् पूर्वा ग्राह्येति दर्शितम् । "एकादशी तथा षष्ठी अमावास्या चतुर्थिका । उपोष्याः पर-संयुक्ताः पराः पूर्वेण संयुताः ॥"[10] इति वचनात् ॥ यत्तु "प्रतिपत् सद्वितीया स्याद् द्वितीया प्रतिपद्युते"ति ॥[11] तदुपवासेतर-विषयम् । **अभावेऽपी**ति । पूर्व-विद्धायाः प्रतिपदः प्रातरसत्त्वेऽपीत्यर्थः । संकल्प उप-

---

1. KālaM. 3. KālaS. pp. 47-48. SamayaM. p. 6.
2. G-Q. add. r. यदि ।
3. Q. No 'यदि' ।
4. KālaM. 3. KālaS. p. 48.
5. G. भागो ।
6. P. add. r. इति ।
7. KālaM. 3. KālaS. p. 48. v. r. पूर्वाह्णः पञ्चकं प्रोक्तो ।
8. KālaTV. p. 205. "गोभिल-पराशरौ" ।
9. P. No 'तु' ।
10. KālaTV. p. 9. KālaM. 4. NirS. p. 22, ll. 26-27. VīraM. समय-प्रकाश, p. 36. KālaS. p. 72.
11. KālaM. 3. NirS. p. 13. ll. 26. "आपस्तम्बः" । KālaS. p. 58. VīraM. समय-प्रकाश, p. 21. SamayaM. p. 4.

वासादेः । ननु[1] प्रातः संकल्पयेद्विद्वान् उपवास-व्रतादिकमि"ति[2] वचनात् प्रतिपदश्च तत्राभावात् कथं संकल्पः स्यादिति चेत्[3], ज्योतिःशास्त्र-रीत्या प्रातरसत्त्वेऽपि धर्म-शास्त्र-रीत्या तत्[4]सत्त्वात् । तथा च देवलः "यां तिथिं समनुप्राप्य अस्तं याति दिवाकरः । सा तिथिः सकला ज्ञेया दानाध्ययन-कर्मस्वि"ति[5] । अत्र कर्मस्विति बहु-वचनात् सकल-दैव-कर्म-विषयत्वम् । अत्रास्तमयात् पूर्वं मुहूर्त-त्रय-व्यापिनी' 'तिथिं समनुप्राप्ये'ति विवक्षितम् अन्यथा पूर्व-विद्धत्वाभावेन उत्तर-तिथेरेव ग्राह्यत्व-प्रसङ्गात् । अत एव शिवरहस्ये "यां प्राप्यास्तमुपैत्यर्कः सा चेत् स्यात्त्रिमुहूर्तिका । धर्म-कृत्येषु सर्वेषु सम्पूर्णान्तां विदुर्बुधाः[6] ॥ इति । ननु "खर्वो दर्पस्तथा हिंसा[7] त्रिविधं तिथि-लक्षणम् । खर्व-दर्पौ परौ पूज्यौ हिंसा[8] स्यात् पूर्व-कालिकी"[9] इति वचनात् कुतो न निर्णयः क्रियत इति चेत् मैवं, खर्वादि-वाक्यस्यैकोद्दिष्टादि-श्राद्ध-विषयत्वात् । तथा च व्यासः "द्वितीयादिक-युग्मानां पूज्यता नियमादिषु । एकोद्दिष्टादि-वृद्ध्यादौ ह्रास-वृद्ध्यादि-चोदने"ति[10] । 'नियमादिष्वि'त्यादि-शब्देन पितृ-कर्म-व्यतिरिक्त-व्रतोपवासादि-सकल-कर्मणां

---

1. G. No 'ननु' ।

2. KālaS. p. 50. KālaV. p. 456.

3. P. No चेत् ।

4. P. No 'तत्' ।

5. KālaM. 3. v. r. तिथिः सा । NirS. p. 14. ll. 1-9. v. r. अस्तं याति च भास्करः ।...स्नान-दान-जपादिषु । KālaS. p. 51. KālaV. p. 463. v. r. स्नान-दान-व्रतादिषु । VīraM. समय-प्रकाश, p. 22.

6. KālaTV p. 16. KālaS. p. 61. VīraM. समय प्रकाश, p. 25. SamayaM. p. 2.

7. P. हिंसा ।

8. P. हिंसा ।

9. KālaM. 3. NirS. p. 14. ll. 3-4. "व्याघ्रः" । KālaTV. p. 500. KālaS. p. 44. v. r. हिंसः । "धर्माधर्म वशादेव तिथिस्त्रेधा विदन्ति ते" इति परार्धम् । VīraM. समय-प्रकाश, p. 22. SamayaM. p. 120.

10. KālaM. 3. NirS. p. 14. ll. 5-6. v. r. द्वितीयादिषु । KālaTV. p. 435.. v. r. वृद्धि-ह्रासा॰ VīraM. समय-प्रकाश, p. 22. SamayaM. p. 5.

11. G. प्रयो (?) ।

ग्रहणम्। 'एकोद्दिष्टादौ'त्यादि-शब्देन विवाहादि-मङ्गलाङ्ग-भूत-श्राद्ध-व्यतिरिक्त-पार्वण-श्राद्धस्य। 'वृद्ध्यादावि'त्यादि-शब्देन खर्व-ग्रहणम्। 'खर्वः' साम्यम्। 'दर्पो' वृद्धिः। 'हिंसा' क्षयः ॥३३-३४॥

तदेवं पूर्वेद्युः शुक्ल-प्रतिपद्युपवासं कृत्वा परेद्युः पारणं कुर्यात्। तच्च तिथ्यन्ते विहितम्। तथा च सुमन्तुः[1] "तिथि-नक्षत्र-नियमे तिथि-भान्ते च पारणम्। [2]अतोऽन्यथा पारणे तु व्रत-भङ्गमवाप्नुयादि"ति[3]। तत्र विशेषमाह **तिथिरि**ति। याम-त्रयात् पूर्वं तिथ्यन्त-लाभे तत्र पारणम्[2]। त्रियामादूर्ध्वं तिथ्यन्त-लाभे तु प्रातरेव पारणमित्यर्थः। "याम-त्रयोर्ध्वगामिन्यां प्रातरेव हि पारणमि"ति वचनात्[4]। एवं शुद्धायां पर-विद्धायां चोपवासेऽपि प्रातरेव[5] पारणम्, "उपवासेषु सर्वेषु[6] पूर्वाह्णे पारणं भवेत्। अन्यथा तु फलस्यार्धं धर्ममेवोपसर्पती"ति[7] देवल-वचनात्। 'धर्मो' यमः। तथा, एकभक्त-नक्तायाचितानि यां[8] तिथिमुद्दिश्य विहितानि परेद्युस्तत्तिथ्यन्ते पारणं कार्यम्,[9] "तिथीनामेव सर्वासामुपवास-व्रतादिषु। तिथ्यन्ते पारणं कुर्याद् विना शिव-चतुर्दशीमि"ति[10] स्कन्द-वचने आदि-पदेन एकभक्तादीनाम् उपादानात् ॥३५॥

**बल्युत्सवं चे**ति। पूर्वेद्युः पूर्व-विद्धायां प्रतिपदि यत्रोपवासः क्रियते तथा बल्युत्सवञ्च कुर्यात् इत्यर्थः। बल्युत्सवश्च बलि-पूजा-रूपः कार्त्तिक-शुक्ल-प्रतिपदि ब्रह्मपुराणादौ विहितो ज्ञेयः। **मुख्ये**ति मुख्य-तिथेः पूर्व-विद्धायाः अन्तराये तत्र कर्माकरणे तिथि-शेषोऽपि[11] परेद्युः पूर्वाह्णे विद्यमानो ग्राह्यः। "पौर्वाह्णिकास्तु तिथयो दैव[12]-कार्ये फलप्रदाः"। इत्यादि-वचनादिति भावः। **शुद्धाधिके**ति। शुद्धा संपूर्णा सती अधिका परेद्युः। त्रि-मुहूर्ता कृष्णापि

---

1. P 'मनुः'। 2-2. P. No अतोऽन्यथा···पारणम्।
3. KālaTV. p. 24. "स्कन्द"। KālaM. p. 34. KālaTV. p. 24.
4. KālaS. p. 56. v. r. ०वर्तिन्यां। "तिथ्यन्ते चोत्सवान्ते च पारणं यत्र चोद्यते" इति पूर्वार्धम्। 5. G. add. r. 'हि'। 6. G. No 'सर्वेषु'।
7. KālaTV. p. 22. KālaM. 3. 8. P. यत्०।
9. G. कुर्यात्। 10. KālaTV. p. 23. KālaS. p. 55. KālaM. 3.
11. P. ०लेशोऽपि। 12. Q. दैवे।

प्रतिपत् पूर्वैव ग्राह्या। संपूर्तः संपूर्णत्वस्य सम्भवादित्यर्थः[1] ॥ एकभक्ते तिथि-निर्णयमाह ग्रहीतव्ये ति। एकभक्तञ्च स्कन्द-पुराणे[2] दर्शितम्, "दिनार्ध-समयेऽतीते भुज्यते नियमेन यत्। एकभक्तमिति प्रोक्तमतस्तत् स्याद् दिवैव ही"ति[3] ॥ अत्र च दिनार्धस्योपरि सार्ध-मुहूर्त-परिमितः कालः पञ्चधा विभागे मध्याह्न-स्यापर-भाग एकभक्तस्य मुख्यः कालः, दिनार्धेऽतीते समनन्तर-भावित्वात्। अस्तमयात् प्राचीनोऽवशिष्टो गौण-कालः। 'दिवे'त्यभ्यनुज्ञानात्। एवं[4] मध्याह्नस्य कर्म-कालत्वात्तद्व्यापिनो तिथिरेकभक्ते[5] ग्राह्या। "कर्मणो यस्य यः काल-स्तत्कालव्यापिनी तिथिः। तया कर्माणि कुर्वीत ह्रास-वृद्धी न कारणमि"ति[6] वचनात्, "मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथिरि"ति वचनात्[7] ॥३६-३८॥

अत्र मध्याह्न-व्याप्तिः षड्विधेत्याह परेद्युरेवेति[8] परेद्युरेव[9] मध्याह्न-व्याप्तिः। पूर्वेद्युरेव वा। उभयत्रापि तद्व्याप्तिः! अव्याप्तिर्वा। उभयत्र साम्येन तदेक-देश-व्याप्तिः। वैषम्येण वेति। तेषु पक्षेषु मध्ये एकैकस्मिन्नेव दिने मध्याह्न-व्याप्तौ सैव ग्राह्या। इतर-पक्षेषु साम्य-पर्यन्तेषु पूर्वैव, गौण-काल-व्याप्ति-लाभात्। वैषम्ये त्वधिकव्यापिनी ग्राह्या। अन्याङ्गस्येति। यत्र प्रधानं पूजादिकं मध्याह्ने विहितं तदङ्गं चैकभक्तं, तत्र प्रधानानुसारेणाङ्ग-भूतस्यैकभक्तस्य प्रधान-दिन एव तदुत्तरमनुष्ठानं कार्यम्। उपवास-प्रतिनिधित्वेन विहितं त्वेक-भक्तमुपवास-तिथौ कार्यमित्यर्थः ॥३९-४१॥ इत्येकभक्त-निर्णयः।

अथ नक्तं निर्णीयते प्रदोषव्यापिनीति। तच्च वराह-पुराणे "मार्गशीर्षे सिते पक्षे प्रतिपद् या तिथिर्भवेत्। तस्यां नक्तं प्रकुर्वीत रात्रौ विष्णुं च

---

1. G. No 'इत्यर्थः'। 2. P. स्कान्दे।

3. KālaS. p. 57. KālaM. 3. NirS. p. 14. ll. 13-14. VīraM. समय-प्रकाश, p. 127, KālaTV. p. 204.

4. P-C. एवञ्च। 5. P. No 'एकभक्ते'।

6. KālaM. 3. "याज्ञवल्क्यः। NirS. p. 13. ll. 15-16. "विष्णुधर्मोत्तर"। KālaTV. p. 7. "वृद्ध-याज्ञवल्क्यः"। SamayaM. p. 113.

7. KālaS. p. 57. v. r. एकभक्त-व्रते। "उदये तूपवासस्य नक्तस्यास्तमये तिथिः" इति परार्धम्। 8. P. No 'परेद्युरेवेति' 9. P. No 'एव'।

पूजयेत्[1] ॥" नक्त-कालो भविष्यत्पुराणे "मुहूर्तोनं दिनं नक्तं प्रवदन्ति मनीषिणः। नक्षत्र-दर्शनान्नक्तम्[2]अहं मन्ये गणाधिप[3] ॥" इति। अस्य च काल-द्वयस्याधिकारि-भेदेन व्यवस्थामाह देवलः, "नक्षत्र-दर्शनान्नक्तं[2] गृहस्थस्य बुधैः स्मृतम्। यति-र्दिनाष्टमे भागे तस्य रात्रौ निषिध्यते"[4] ॥ इति। स्मृत्यन्तरेऽपि, "नक्तं निशायां कुर्वीत गृहस्थो विधि-संयुतः। यतिश्च विधवा चैव कुर्यात् तत् सदिवाकरम् ॥ सदिवाकरन्तु तत् प्रोक्तमन्तिमे घटिका-द्वये। निशा-नक्तन्तु विज्ञेयं यामार्धं प्रथमे सदे"ति[5]। रात्रि-नक्त-भोजने व्यासः "त्रिमुहूर्तं प्रदोषः स्याद् भानावस्तं गते सति नक्तं तु तत्र कुर्वीत इति शास्त्रस्य निश्चयः ॥"[6] इति। तदेवं नक्त-कालौ व्यवस्थितौ। तत्र नक्तं प्रदोषव्यापिन्यां तिथौ कार्यम्, तदाह[7] वत्सः "प्रदोष-व्यापिनी ग्राह्या तिथिर्नक्त-व्रते सदा। एकादशीं विना सर्वा शुक्ले कृष्णे तथा स्मृते"ति[8]। एकादश्यान्तु यन्नक्तं तत्रोदयव्यापिनी तिथिर्ग्राह्या। तदुक्तं स्कन्द-पुराणे[9] "प्रदोषव्यापिनी ग्राह्या सदा[10]नक्त-व्रते तिथिः। उदयस्था सदा पूज्या हरि-नक्त-व्रते तिथिरि"ति[11]। प्रदोषश्च[12] त्रि-मुहूर्ते प्रदोषः स्याद्[13]भानावस्तं गते सति। नक्तं तत्र तु कर्तव्यमिति शास्त्र-विनिश्चयः ॥" इति व्यास-वचनोक्तः पारि-भाषिको ज्ञेयः। अत्र पूर्ववत् प्रदोष-व्याप्तौ षट् पक्षा इत्याह व्याप्तिर्दिन-द्वय

---

1. KālaM. 3. 2-2. G-P. No अहं मन्ये...दर्शनान्नक्तम्।

2. G. नक्षत्र-दर्शमानक्तम्।

3. KālaV. p. 4A8. KālaS. p. 59. KālaM. 3. NirS. p. 15. ll. 1-2. VīraM. समय-प्रकाश, p. 129. KālaTV. 188.

4. KālaS. p. 59. KalaM. 3. KalaTV. p. 211.

5. KālaS. p. 59. KālaM. 3. NirS. p. 15. l. 12. पूर्व-श्लोकमात्रम्। VīraM. समय-प्रकाश, p. 13. प्रथम-श्लोक-मात्रम्। KālaTV. p. 211. शेषार्धं नास्ति।

6. KālaS. p. 59. v. r. त्रिमुहूर्तः। KālaM. 3. NirS. p. 14. ll. 23-24. VīraM. समय-प्रकाश, p. 120. KālaTV. p. 208, v. r. त्रिमुहूर्तः।

7. G-P. तथाह।

8. KālaM. 3. VīraM. समय-प्रकाश, p. 129. पूर्वार्ध-मात्रम्।

9. P. स्कान्दे। 10. P. तदा।

11. KālaS. p. 58. KālaM. 3. NirS. p. 15. ll. 16-17. परार्ध-मात्रम्।

12. P. No 'प्रदोषश्च'। 13. P. प्रदोषस्त्रि-मुहूर्तः स्याद्।

